# अर्थसंग्रहः

महामहोपाध्यायलौगाक्षिभास्कर
विरचितः

## मीमांसाप्रकरणम् ।

कलिकाताराजकीयसंस्कृतविद्यालयालङ्कार
स्मृतिशास्त्राध्यापक

श्रीप्रमथनाथतर्कभूषणविरचितामलानाम
टीकोद्भासितः ।

वाल्मीकियन्त्रतः
श्रीकाशीनाथभट्टाचार्य्येण
प्रकाशितः ।
श्रीठाकुरदासचट्टोपाध्यायेन मुद्रितम् ।
कलिकाता १८९८ खृष्टाब्दाः



मूल्य ॥/० दश आना ।

# अर्थसंग्रहः ।

महामहोपाध्यायलौगाक्षिभास्कर

विरचितः

मीमांसाप्रकरणम् ।

कलिकाताराजकीयसंस्कृतविद्यालयालङ्कार

स्मृतिशास्त्राध्यापक

श्रीप्रमथनाथतर्कभूषणविरचितामलानाम

टीकोद्भासितः ।

वाल्मीकियन्त्रतः

श्रीकाशीनाथभट्टाचार्य्येण

प्रकाशितः ।

कलिकाता १८९९ खृष्टाब्दः

श्रीकाशीजयति ।

# उत्सर्गपत्रम् ।

स्वस्तिविविधविरुदावलीविराजमानमानोन्नत

द्विजराजवङ्गवसुधैकमण्डन-

महाराज

श्रील

श्रीयुत स्यर् यतीन्द्रमोहनठाकुर के, सि, एस्, आइ

महोदयपरमोदारचरितेषु,

महाराज !

आशोल्लासियशःशशिन् ! गुणिगणालङ्कार ! दीनाश्रय !
चोणीमण्डलमण्डन ! प्रतिदिनं सद्दिद्यरचाव्रत !
सञ्चिन्त्याश्रितसत्कृती कुशलतां कारुण्यपूर्णां प्रभो !
विन्यस्ता भवतः सरोजकरयोरेषामदीयाकृतिः ॥

पर्य्यासा दिनभर्त्तुरुज्ज्वलतमादिग्दीपनोदीधिति
र्विश्वोल्लासिसुधांशुशीतकिरणैः सन्तृप्तमुच्चैर्जगत् ।
इत्यालोक्य कदापि भूमिवलये किं भूपते ! प्रार्थ्यते
खद्योतस्य चिराय यान्तु विलयं स्निग्धोज्ज्वला रश्मयः ॥

इति—

एकान्तानुगतस्य

श्रीप्रमथनाथदेवशर्म्मणः ।

T

श्रीकाशी जयति ।

# अर्थसंग्रहः ।

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः ।
कुरुते जैमिनिनये प्रवेशायार्थसंग्रहम् ॥

---

श्रीविश्वनाथोविजयते ।

विशुद्धानन्दपादाब्जद्वन्द्वं मानसमोहनम् ।
सर्व्वप्रदं सर्व्ववन्द्यं वन्दे विघ्ननिवृत्तये ॥

रङ्गिण्या निजमायया सुजनुषां सेव्याङ्घ्रिपद्मश्रिया
मात्रा नः शिवभावया प्रविलसद्वामाङ्गमालेश्वरम् ।
विश्वम्मोहनिवृत्तये घृततनुं तातं विभुं शङ्करम्
श्रीताराचरणद्विजं प्रतिनमन् भूयासमन्तेष्वपि ॥

तर्काम्भोनिधिमन्थशैलममलं धीनिर्ज्जितस्वर्गुरुम्
विद्वद्वृन्दविनिद्रदर्पकमलध्वंसोद्यदिन्दुप्रभम् ।
विद्यार्थिव्रजकल्पशाखिवदनं तातायजं श्रीयुतम्
वन्दे बोधनिधिं गुरोरपि गुरुं राखालदासं द्विजम् ॥

तर्कविद्यामयावाप्ता यत्पादाम्बुजसेवया ।
श्रीसार्व्वभौमोपनामशिवचन्द्रं नमामि तम् ॥

द्विविधा खलु वैदिकी निष्ठा कर्म्मनिष्ठा ज्ञाननिष्ठा चेति तत्र कर्म्मनिष्ठापराणां त्रैवर्णिकानां श्रेयःप्राप्तिसाधनं प्रतिपादयन् वेदभागः कर्म्मकाण्डमिति गीयते निवृत्तिमार्गमवलम्बमानानां ज्ञाननिष्ठापराणां परमपुरुषार्थसाधनं प्रतिपादयन् वेदभाग उपनिषदिति ज्ञानकाण्डमिति च गीयते । तत्र सकामानां काम्यस्वर्गादिरूपप्रयोजनसाधनयागादिस्वरूपप्रकाशनेन महोपकारकभावमापद्यमानं विधिनिषेधाद्यात्मकं कर्म्मकाण्डं, ज्ञाननिष्ठापराणामपि निवृत्तकामानां स्वप्रकाशितकर्म्मानुष्ठानद्वारा चित्तशुद्धिरूपपरमश्रेयःसाधनप्रयोजकभावमवलम्बते अस्मिन् खलु वस्तुनि वेदप्रामाण्यमङ्गीकुर्व्वतां सर्व्वेषामेव दार्शनिकानामस्त्यैकमत्य मित्यत्र सकलास्तिकदार्शनिकाभ्युपेतपरमप्रयोजनकं स्वाध्यायाख्यवेदाध्ययनं विदधद् विधिः स्वाध्यायोऽध्येतव्य इत्यादिरूपः कृत्स्नस्य खलु वेदस्य अर्थज्ञानफलकतात्पर्य्यनिर्णयाय विचारात्मकं मीमांसाशास्त्रमाक्षिपति, नहि खलु अगृहीततात्पर्य्यकस्य वाक्यजातस्य पौरुषेयस्य अपौरुषेयस्य वा शाब्दधीजनने सामर्थ्यमस्ति न चानुत्पादयन् अन्वयधियं वेदः अन्येन केनापि प्रकारेण पुरुषार्थानुकूलप्रवृत्तावुपयोगीभवितुमर्हतीत्यकामेनापि वेदतात्पर्य्यनिर्णयाय मीमांसाशास्त्रमध्येतव्यं त्रैवर्णिकैः स्वधर्म्ममनुतिष्ठद्भिरितिप्रतिसन्धाय परमकारुणिको मुनिर्जैमिनिर्द्वादशाध्यायात्मकं मीमांसाशास्त्रं प्रणि-

नाय। तत्र च प्रथमे अध्याये विध्यर्थवादमन्त्रस्मृतिनामधेयात्मकस्य वेदस्य सपरिकरं प्रामाण्यं निरूपितं, द्वितीये कर्म्मभेदोपोद्घातप्रमाणापवादप्रयोगभेदादिस्वरूपम्, तृतीये श्रुतिलिङ्ग-वाक्यादिविरोधप्रतिपत्तिकर्म्मानारभ्याधीतबहुप्रधानोपकारकप्रयाजादिस्वरूपं, चतुर्थे प्रधानप्रयोजकत्वाप्रधानप्रयोजकत्वजुह्वपर्णतादिस्वरूपं, पञ्चमे श्रुत्यादिक्रमतद्विशेषदौर्ब्बल्यप्राबल्यस्वरूपं, षष्ठे अधिकारितद्धर्म्मद्रव्यप्रतिनिध्यर्थलोपनप्रायश्चित्तसत्रदेयवह्निप्रभृतिस्वरूपं, सप्तमे प्रत्यक्षवचनातिदेशेषु नामलिङ्गातिदेशस्वरूपं, अष्टमे स्पष्टास्पष्टप्रबललिङ्गातिदेशस्वरूपम्, नवमे ऊहादिस्वरूपम्, दशमे बाधहेतूद्वारलोपविस्तारबाधकारणकार्य्यैकत्वग्रहादिसामप्रकीर्णनार्थस्वरूपम्, एकादशे तन्त्रोपोद्घाततन्त्रावापतन्त्रप्रपञ्चनावापप्रपञ्चनादिस्वरूपं, द्वादशे प्रसङ्गतन्त्रनिर्णयसमुच्चयविकल्पादिस्वरूपम्। इति संक्षेपतः शास्त्रार्थसंग्रहः।

तदेतत् कर्म्ममीमांसाशास्त्रमतिदुर्ब्बोधमाकलय्य व्युत्पित्सूनां तत्र प्रवेशसौकर्य्याय तत्र भवान् लौगाक्षिभास्करः शब्दसंक्षेपेऽपि गभीरार्थजातालङ्कृतं अर्थसंग्रहाख्यं प्रकरणमारभमाणः शिष्टाचारपरम्पराप्राप्तविधेयभावमङ्गलाचरणपूर्व्वकम् । श्रोतृप्रवृत्त्युपयोगिप्रयोजनादिप्रतिपादकं श्लोकमुपनिबध्नाति वासुदेवमिति। वासुदेवं सर्व्वान्तर्य्यामिणं नारायणशब्दप्रतिपाद्यमिति यावत् विशुद्धचित्तस्य वसु-

देवपदप्रतिपाद्यतया तत्र प्रकाशमानत्वेन भगवतस्तन्नियामकत्वात् तदुक्तं भागवते त्रित्तं विशुद्धं वसुदेवसंज्ञितं यदीयते तत्र पुमानवारित इत्यादि, रमायाःकान्तं मायोपाधिकमिति तात्पर्य्यम् अतएव तस्य नतिकर्म्मत्वं शुद्धस्य सर्व्वधर्म्मानाश्रयत्वेन तदसम्भवात् नत्वा स्वावधिकनिकृष्टोत्कर्षबोधकव्यापारानन्तरमिति तु तात्पर्य्यं जैमिनिनये जैमिनिमुनिप्रणीतद्वादशलक्षणात्मकवेदतात्पर्य्यविचारशास्त्रे प्रवेशाय अनायासेन प्रमेयाधिगमाय अर्थसंग्रहं अर्थाः संगृह्यन्तेऽनेन इति अर्थसंग्रहः तदाख्यं प्रकरणं लौगाक्षिभास्करः कुरुते इति योजना। अस्य च ग्रन्थस्य मीमांसाप्रकरणत्वेन यएव खलु विषयसम्बन्धप्रयोजनादयः कर्म्ममीमांसाशास्त्रारम्भप्रयोजकाः तएवात्रापि इति न ते पृथगालोचनीया इत्येतद्बोधनाय एव जैमिनिनये इत्याद्युक्तमित्यवधेयम्। कर्म्ममीमांसाशास्त्रस्य धर्म्मएव मुख्योविषयः अधीतस्वाध्यायः धर्म्मतत्त्वजिज्ञासुस्त्रैवर्णिकएवाधिकारी स्वर्गादिरूपं श्रेयः प्रयोजनं, तस्य च विषयेण सम्बन्धः साध्यसाधनभावलक्षणः विषयस्य च शास्त्रेण ज्ञाप्यज्ञापकभावरूपः।

तत्रादौ प्रारिप्सितार्थसंग्रहाख्यमीमांसाप्रकरणग्रन्थस्य कर्म्ममीमांसाशास्त्रारम्भाधीनारम्भकत्वेन मीमांसाशास्त्रारम्भसूत्रमवतारयति अथेत्यादिना—

T

अथ परमकारुणिको भगवान् जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं प्रणिनाय, तत्रादौ धर्मजिज्ञासां सूत्रयामास अथातो धर्मजिज्ञासेति। अत्राथशब्दो वेदाध्ययनानन्तर्य्यवचनः ।

---

प्रकरणस्याथशब्दः अधिकारवाची परमकारुणिको निरुपधिककरुणाश्रयः भगवान् माहात्म्यवान् भगं श्रीकाममाहात्म्य वीर्य्ययत्नार्क कीर्त्तिषु इतिकोषात् जैमिनिर्व्यासशिष्यः कश्चनमुनिः धर्म्मविवेकाय यद्द्वादशलक्षणीं प्रणिनाय तत्रादौ अथातो धर्म्मजिज्ञासेति धर्म्मजिज्ञासां सूत्रयामास इति योजना। द्वादशानां लक्षणानां समाहारः द्वादशलक्षणी लक्षणशब्दस्यात्र अध्यायबोधकः सूत्रमिदं व्याख्यातुमुपक्रमते अत्रेति अत्र, सूत्रे, घटकत्वं सप्तम्यर्थः इदमत्रावधेयम् सूत्रमिदं अधिकरणात्मकम् अधिकरणञ्च विषयसंशयपूर्व्वपक्षोत्तरसिद्धान्तभेदात् पञ्चावयवात्मकं अस्य च सूत्रस्य विषयः चोदनालक्षणोऽर्थो धर्म्म इत्यादिकमन्वाहार्य्ये च दर्शनादित्यन्तं धर्म्मतात्पर्य्यनिर्णयानुकूलं जैमिनिप्रणीतशास्त्रं तत्र संशयः तदिदं धर्म्मविचारशास्त्रं अध्ययनविधिप्रयुक्तत्वेनारभ्यं न वा इति पूर्व्वपक्षस्तु अध्ययनविधिप्रयुक्तत्वेननारम्भार्हमिदं धर्म्मविचारशास्त्रं अनपेक्षितत्वात् तथाहि यदि तावत् स्वाध्यायो-

ध्येतव्य इति वेदाध्ययनविधिः अर्थावबोधरूपदृष्टफलकः स्यात् तदा तात्पर्य्यनिश्चयमन्तरेण विधेयीभूतशाब्दधियो जननासम्भवेन अवश्यमेव धर्म्मरूपवेदार्थतात्पर्य्यनिर्णयानुकूलविचारशास्त्रस्य सम्भवेदपेक्षणीयता नचैतत् सम्भवति अध्ययनस्य अर्थज्ञानं प्रति हेतुत्वं लोकत एवावगतमिति न तत्राध्ययनविधिविधेयत्वम् उपपद्यते, तथाच सति लोकसिद्धार्थज्ञापकत्वेन तद्विधेरनुवादकत्वलक्षणमप्रामाण्यं प्रसज्जेत। नच यथा व्रीहीन् अवहन्तीत्यत्र तण्डुलस्वरूपनिष्पत्तौ अवघातस्य कारणत्वे सत्यपि लोकप्रमाणावगते, अवघातनिष्पन्नैरेव तण्डुलैः पुरोडाशनिष्पत्तिं द्वारीकृत्य यागापूर्व्वं जननीयमिति नियमरूपतामङ्गीकृत्य अवघातविधेः अलौकिकार्थज्ञापकत्वेन प्रामाण्यमङ्गीकृतं तथा अत्रापि विहितमध्ययनं अर्थज्ञानं द्वारीकृत्य यागापूर्व्वं प्रति प्रयोजकभावमभ्युपगच्छत् स्वबोधकशास्त्रस्य स्वाध्यायोऽध्येतव्य इत्येवं रूपस्य नियमरूपतया प्रामाण्यप्रयोजकं भविष्यतीति नार्थज्ञानरूपदृष्टफलकत्वेऽपि अध्ययनविधेरप्रामाण्यं इति वाच्यं अवघातवैषम्येण नियमविधित्वायोगादध्ययनविधेः

तथाहि यथा दर्शपूर्णमासप्रकरणे पठितोऽवघातः दर्शपूर्णमाससाध्यापूर्व्वं प्रत्येव नियम्यते न तण्डुलस्वरूपनिष्पत्तौ तस्य नखविदलनादिनापि निष्पत्तिसम्भवेन तदंशे नियमासम्भवात् तथा अत्रापि अर्थज्ञानस्य गुरुमुखश्रवणानन्तरतयाविधोच्चारणरूपाध्ययनं विनापि लिपि

पाठादिनापि सम्भवेन क्रत्वपूर्व्वेषु एव विधिना अध्ययनं नियम्यते इत्यङ्गीकरणीयं तथाच सति अधीतैरेव वेदैरवगतानि दर्शपूर्णमासादीनि कर्म्माणि अपूर्व्वजनकानीति अध्ययनविधेः फलतोऽर्थः पर्य्यवस्येत् नचैवं युक्तं अध्ययनस्य अनारभ्याधीतत्वेन दर्शपूर्णमासादिसाध्यापूर्व्वं प्रति वस्तुतोऽप्रयोजकत्वात् तस्मात् स्वाध्यायोऽध्येतव्य इति वेदस्य दर्शमासादिविधिवत् उत्पत्तिविधिरूपतयैव प्रामाण्यमङ्गीकरणीयं तथाच अध्ययनेनैव शाब्दार्थापूर्व्वसिद्धौ वेदार्थज्ञानस्य विधेयतया अनपेक्षितत्वेन धर्म्मविचारमकृत्वैव गुरुगृहात् समावर्त्तितव्यमिति—

अत्रोत्तरं यदुक्तमर्थज्ञानस्य अध्ययनविधिविधेयत्वे तद्विधेरप्रामाण्यं प्रसज्जेत इति नैतद्युक्तं लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना। विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यति इत्याद्यभियुक्तोक्तेः। ननु अर्थज्ञानरूपदृष्टमात्रफलकत्वे तद्विधेरप्रामाण्यं सकलक्रत्वपूर्व्वं प्रति नियमरूपत्वे च सिद्धान्तविरोध इति पक्षद्वयेऽपि दोषस्य दर्शितत्वात् कथमियं भवतामभियुक्तोक्तिः सङ्गच्छेत इति चेन्नैवं तदुक्तितात्पर्य्यानवगमात् तथाहि न वयं सकलक्रत्वपूर्व्वं प्रति नियमरूपतया अध्ययनविधेः प्रामाण्यं व्यवस्थापयामः येनैवं पर्य्यनुयोगस्य प्रसरः न हि खलु क्रत्वपूर्व्वं प्रति नियमभावासम्भवेऽपि अध्ययनविधेः अन्यं प्रतिनियमरूपतापि निराकृता भवति अधीतवेदानां

त्रैवर्णिकानामेव योऽयमग्निहोत्रादिषु अधिकारः सिद्धान्तितः नानधीतवेदानां शूद्रादीनामिति नियमो दृश्यते स भवतु प्रयोजनं अध्ययनविधेः तावतैव स्वाध्यायोऽध्येतव्य इति श्रूयमाणविधेः प्रामाण्यं निराबाधमेव, तथाहि असत्यध्ययनविधौ दर्शपूर्णमासादिविधयो विद्वांसं विहिताधिकारवत्तया अलभमाना अविद्वांसमेवादौ अधिकृत्य ज्ञानं विना अनुष्ठानासिद्ध्या विद्यामाक्षिपन्तोऽविशेषेण सर्व्वानेव ज्ञानस्वरूपयोग्यतावतो जनानधिकुर्य्युः सति तु अध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारोऽवगम्यते न शूद्रादीनां तथाहि "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्" इत्यादौ द्वितीयाश्रुतिभिः उपनयनसंस्कारकर्म्मतया प्राप्तास्त्रैवर्णिकाः किमस्माभिरुपनीतैः कर्त्तव्यं इत्यपेक्षन्ते सन्निधौ च अनुक्तकर्त्तृकं विधीयमानमध्ययनं कर्त्तारमपेक्षते इत्यत्र सति अपेक्षासन्निधियोग्यताबलेन एवं खल्वध्यवसीयते यत् त्रैवर्णिकैरेव उपनीतैरध्ययनद्वारा अर्थज्ञानं कर्त्तव्यं इति एवञ्च फलवदध्ययनकर्त्तृभूतमाणवकसंस्कारत्वादुपनयनं अध्ययनाङ्गं अध्ययनमपि अर्थज्ञानरूपदृष्टफलकं अर्थज्ञानमपि क्रत्वनुष्ठानौपयिकत्वात् सुप्रसिद्धफलकमिति भवति सर्व्वेषामेषां फलवत्त्वं इत्यत्र लब्धेषु त्रैवर्णिकेषु विद्वत्सु न दर्शपूर्णमासादिविधयः शूद्रादेः किन्तु ब्राह्मणादेरेव अधिकारमाक्षिपन्ति इति सिद्धं अध्ययनविधेर्नियमार्थत्वं

अतः शब्दो हि वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते-स्वाध्यायोऽध्येतव्य इत्यधययनविधौ तदध्ययनस्य अर्थ-ज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात्। तथाच वेदा-ध्ययनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययन-मतोहेतोर्धर्मस्य वेदार्थस्य जिज्ञासा कर्त्तव्येति शेषः। जिज्ञासापदस्य विचारे लक्षणा अतो धर्म-विचारशास्त्रमिदमारभ्यमिति शास्त्रारम्भसूत्रार्थः।

---

दृष्टफलकत्वञ्चेति साधूक्तमभियुक्तैर्लभ्यमाने फल इत्यादि सिद्धान्तस्तु इत्थं स्वाध्यायोऽध्येतव्य इति विधिना विहिते अर्थज्ञानफलके वेदाध्ययने तात्पर्य्यनिश्चयानुकूलविचार-मन्तरेण शाब्दबोधानुपपत्तेरध्ययनविधिरेव फलतो वि-चारशास्त्रमाक्षिपति इति धर्म्मजिज्ञासा कर्त्तव्यैव इति अपरेतु सकलक्रत्वपूर्व्वं प्रत्यपि नियमरूपतया अध्ययन-विधेः प्रामाण्यं प्रकारान्तरेण समर्थयन्ति तत्प्रपञ्चस्तु विस्तरभिया न प्रदर्श्यते। तमिमं सिद्धान्तं मनसि कृत्य अथादिशब्दानां व्याख्यानं कर्त्तुमुपक्रमते अथ शब्द इति।

यतो वेदाध्ययनं अर्थज्ञानफलकमतो वेदाध्ययनानन्तरं धर्म्मस्वरूपवेदार्थतात्पर्य्यनिर्णयाय विचारशास्त्रमिदमारभ्य-मिति तु समुदितसूत्रार्थ इत्यवसेयं।

अथ को धर्म्मः किं तस्य लक्षणं इति चेदुच्यते यागादिरेव धर्म्मः तल्लक्षणञ्च वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति प्रयोजनेऽतिव्याप्तिवारणाय प्रयो-

---

नतु जिज्ञासापदस्य ज्ञानगोचरेच्छैव योगलभ्योऽर्थः अस्मिन् च सूत्रे विचारबोधकपदान्तराभावेन कुतोऽनेन सूत्रेण विचारस्यारम्भार्हत्वं प्रतीयते इत्याशङ्कायामाह जिज्ञासापदस्येति तथाच जिज्ञासा इत्यत्र पदे प्रकृतिर्ज्ञा धातुः प्रत्ययश्च सन् इति भागद्वयं वर्त्तते तत्र धातुना सामान्यतो ज्ञानवाचिना तात्पर्य्यवलेन अजहत्स्वार्थलक्षणया अनुष्ठानोपयोगिज्ञानं बोध्यते प्रत्ययेन च सना स्वार्थेच्छायाः कार्य्यरूपोविचारः जहल्लक्षणया बोध्यते विचारशास्त्रस्यारम्भ्यत्वमुपसंहरन्नाह अत इति अध्ययनविधेः विचारशास्त्रारम्भं प्रतिप्रयोजकत्वं अतः शब्दघटकप्रकृतेरर्थः ननु विचारशास्त्रस्य आरम्भो न भवितुमर्हति तद्विषयस्य धर्म्मस्य निरूपयितुमशक्यत्वात् सद्भावे खलु लक्षणप्रमाणयोः वस्तु निरूपयितुं शक्यते नच धर्म्मे लक्षणं प्रमाणं वा उत्पश्यामः अलौकिकत्वात् इत्याशङ्कते अथेति उत्तरयति उच्यते इति नन्वादिपदग्राह्याणां अननुगततया व्युत्पित्सोः कथं सामान्यतः धर्म्मपदप्रतिपाद्यनिर्णयः अनुगतरूपरहितानां वस्तूनां लक्ष्यत्वासम्भवात् इत्यत आह तल्लक्षणं चेति—

जनवदिति भोजनादावतिव्याप्तिवारणाय वेदप्रति-पाद्य इति अनर्थफलकत्वादनर्थभूतेश्येनादावति-व्याप्तिवारणाय अर्थ इति । न च चोदनालक्षणोऽर्थो धर्म इति सौत्रलक्षणविरोधः चोदनापदस्य विधि-रूपवेदैकदेशपरत्वादिति वाच्यं तत्रापि चोदनापदस्य वेदमात्रपरत्वात् वेदस्य च सर्व्वस्य धर्मप्रतिपाद-कत्वात् ।

---

वेदप्रतिपाद्येष्टसाधनत्वे सति बलवदनिष्टाननु-बन्धित्वं धर्म्मपदव्यवहारनियामकं इति निष्कर्षः लक्षण-वाक्यघटकानां विशेषणानां सार्थक्यं दर्शयितुमुपक्रमते प्रयोजन इत्यादिना प्रयोजनं स्वर्गादि नच तत्र धर्म्मपद-व्यवहारः प्रामाणिकानामिति तत्रातिव्याप्तिः निवार्य्यै-वेति भावः । नचानिष्टे बलवत्त्वं निरर्थकमिति वाच्यं यागादेरपि अवर्ज्जनीय दुःखहेतुभूतशारीरश्रमबहुवित्त-व्ययसाध्यत्वेन तत्र प्रसक्तामव्याप्तिं वारयितुं तदुपादा-नस्य आवश्यकत्वात् अनिष्टे बलवत्त्वञ्च प्रकृतफलकामना-ऽप्रतिबध्यद्वेषविषयतावत्त्वं ग्राह्यं अर्थपदोपादानेन श्येना-दावतिव्याप्तिं व्यावर्त्तयतो ग्रन्थकृतो बलवदनिष्टाननु-बन्धित्वे एव तत्पदतात्पर्य्यमवसीयते इति सुधीभिर-वधेयम् ।

ननु चोदनालक्षणोऽर्थो धर्म्म इति सूत्रेण धर्म्मो

स च यागादिर्यजेतस्वर्गकामइत्यादिवाक्येन स्वर्ग-मुद्दिश्य पुरुषं प्रति विधीयते। तथाहि यजेतेत्य-त्रास्त्यंशद्वयं यजिधातुः प्रत्ययश्च प्रत्ययेऽप्यस्त्यंश--द्वयं आख्यातत्वं लिङ्त्वञ्च तत्राख्यातत्वं दशल कारसाधारणं लिङ्त्वं पुनर्लिङ्मात्रे उभाभ्यामप्या-शाभ्यां भावनैव उच्यते।

---

चोदनैव प्रमाणमित्युक्तं चोदना च लिङादिविधिरूपः स च वेदस्य एकदेशः इति वक्ष्यते तथाच विधिरूपवेदैक-देशबोध्यः प्रयोजनवदर्थो धर्म्म इति सौत्रार्थः सम्पद्यत भवता तदनभिधाय सामान्यतो वेदप्रतिपाद्य तादृशार्थस्य धर्म्मरूपत्वं व्यवस्थापितमिति दुष्परिहरः सूत्रविरोध इति आशङ्क्य निराकरोति नचेति वेदमात्रपरत्वात् कृत्स्न-वेदपरत्वात्। एतेन धर्म्मे चोदनाएव प्रमाणमिति स्थिते प्रमाणासंभवनिबन्धना धर्म्मस्य अवस्तुत्वशङ्का सुतरां निरस्ता इत्यवसेयम्। ननु सोऽरोदीत् यदरोदीत् तद्रु-द्रस्य रुद्रत्वं स प्रजापतिरात्मनोवपामुदखिदत् इत्याद्यर्थ-वादानां यागादिरूपधर्म्मप्रतिपादकत्वाभावात् पुरुषप्रवृत्ति प्रयोजकशब्दात्मकचोदनापदस्य कथं सकलवेदपरत्वं इष्टञ्च अर्थवादानां वेदत्वं इत्याशङ्कायामाह सर्व्वस्येति अयमत्रा-शयः कर्म्मस्वरूपबोधकविधिना उत्थापितायाः प्राशस्त्याद्य काङ्क्षाया निवर्त्तकतया सोऽरोदीदित्याद्यर्थवादानां विधि-

भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः सा च द्विधा शाब्दीभावना आर्थी भावना चेति।

---

वाक्यतया अस्त्येवधर्म्मपरत्वं अतएवोक्तं भगवता जैमिनिना विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधीनां स्युरिति।

ननु स्वर्गकामो यजेत इत्यादौ यागादौ स्वर्गादिरूपेष्टसाधनताबोधकपदाभावेन कथं चोदनया स्वर्गादि साधनत्वेन यागादिरनुष्ठेयतया विधीयते इत्याशङ्कायां तादृशवाक्येषु पदघटकप्रकृतिप्रत्ययादीन् विभज्य तत्तदंशानामभिमतान् अर्थान् दर्शयितुमुपक्रमते तथाहीति यजेतेत्यत्र यजेतेतिपदे सप्तम्याघटकत्वमर्थः तच्चात्र स्वविषयिताव्यापकविषयिताकत्वं स्वपदेन यजेतेतिपदं ग्राह्यं अस्ति च पदावयवीभूतप्रकृतिप्रत्ययविषयितायाः पदविषयिताव्यापकत्वं प्रकृतिप्रत्ययावविषयीकृत्य ज्ञानस्य पदं विषयीकर्त्तुमसमर्थत्वात्, अंशद्वयं भागद्वयं घटकद्वयमिति यावत्, प्रत्यये लिङि, अत्रतुसप्तमी आधारे अंशद्वयं धर्म्मद्वयं निरुक्तांशपदार्थघटकत्वस्य धर्म्मेऽपि अविशेषेण सत्त्वात्। तथाच यजेतेति पदघटकलिङि आख्यातत्वं लिङ्त्वञ्चेति धर्म्मद्वयं अस्तीति वाक्यार्थः पर्य्यवसन्नः। उभाभ्यामप्यंशाभ्यां आख्यातत्वलिङ्त्वाभ्यामिति भावः भावनैव उच्यते स्वजन्यशाब्दबोधविषयीक्रियते



T

इत्यर्थः तथाच आख्यातत्वावच्छिन्न शक्ततायां लिङ्त्वावच्छिन्नशक्ततायाश्च निरूपकतावच्छेदकं स्वनिरूपित शक्यतावच्छेदकं वा भावनात्वमिति पर्य्यवसितम् ।

अथ किमिदं आख्यातलिङुभयवाच्यसाधारणं भावनात्वं नाम तद्ज्ञाने न तावद्अननुगतबहुशक्यज्ञानं भवितु मर्हतीत्यत आह भावना नाम इति। भवितुरुत्पद्यमानस्य भवनानुकूल उत्पत्त्यनुकूलः भावयितुःप्रयोजकस्य व्यापारविशेषो भावना इत्यर्थः तथाच किञ्चिन्निष्ठजन्यता निरूपकीभूतप्रयोजकनिष्ठव्यापारविशेषत्वमेव भावनात्वमिति फलितम्। दृष्टं हि लोके ओदनोत्पत्तौ अनुकूलाया देवदत्तप्रवृत्तेः, उत्पद्यमानायां च प्रयोज्यपुरुषनिष्ठायां प्रवृत्तौ अनुकूलायाः प्रयोजकपुरुषेच्छायाश्च व्यापारभावनादिशब्दव्यपदेश्यत्वम् वेदे च उत्पद्यमानस्य यजेत स्वर्गकाम इत्यादि वाक्यघटकधात्वर्थस्य यागादेः फलस्य च स्वर्गादेः उत्पत्त्यनुकूलः स्वर्गकामस्य पुंसः प्रवृत्तिरूपस्य व्यापारविशेषस्य उत्पद्यमानाया वा स्वर्गकामपुरुषनिष्ठप्रवृत्तेः उत्पत्त्यनुकूलस्य लिङादिव्यापारविशेषस्य च। स च व्यापारः धात्वर्थादन्यएव नियतधात्वर्थसम्बन्धाकारेण प्रतिभासते सएव व्यापारः मीमांसकैर्भावनापदेन व्यपदिश्यते । तथाचोक्तमभियुक्तैरन्योत्पादानुकूलाहि भावना साध्यरूपिणी इति धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते। तथापि सर्व्वसामान्यरूपेणैवावगम्यते। इति च।

तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना सा लिङंशेनोच्यते लिङ्श्रवणेऽयं मां प्रवर्त्तयति मत्प्रवृत्त्यनुकूलव्यापारवान् इति नियमेन प्रतीतेः यद् यस्मात् शब्दान्नियमतः प्रतीयते तत्तस्य वाच्यं यथा गामानयेत्यस्मिन्वाक्ये गोशब्दस्य गोत्वम्।

---

तामेतां भावनां विभजते सा च द्विधेति शाब्दी शब्दनिष्ठा शब्दस्याच लिङादिरूपएव ग्राह्यः आर्थी शब्दभिननिष्ठा शब्दाप्रवृत्तिः इत्यर्थः। तत्र इति सप्तम्या द्विवचनं सप्तमी चात्र निर्द्धारणे प्रवृत्तिरूपार्थभावनाया भाव्यायाः भवनानुकूलो वैदिकलिङादिशब्दनिष्ठोऽलौकिकः कश्चन व्यापारविशेषः तयोर्भावनयोर्मध्ये शाब्दभावनापदेनोच्यते इति पर्य्यवसितम्। तादृशविलक्षणशाब्दभावनाङ्गीकारानुकूलप्रमाणमुपन्यस्यत्नाह लिङ्श्रवणे चेत्यादि। अयं वैदिकलिङादिशब्दः, मां प्रवर्त्तयति इत्यस्य विवरणं मत्प्रवृत्तीत्यादिवाक्यं, लोके तु तादृशलिङुच्चारयितादिपुरुषनिष्ठाभिप्रायविशेषस्यापि प्रवर्त्तनात्वेन रूपेण लिङादिवाच्यत्वं इत्यतस्तथाविधस्थले अयमित्यनेन प्रवर्त्तयिता पुरुषएव ग्राह्य इति विभावनीयम्। नचास्य वैषम्यस्य किं वीजं लोकवद् वेदेऽपि वेदकर्त्तुः परमेश्वरस्य अभिप्रायविशेषएव शाब्दभावनापदव्यपदेश्योऽस्तु शब्दस्य द्विरूप·

स्थायितया गुणतया च प्रवृत्त्युपयोगिव्यापारवत्त्वायोगात् इति वाच्यं वैदिकशब्दानां नित्यतया तत्कर्त्तुरसम्भवात् तत्र च गुणत्वाङ्गीकारस्य मीमांसकनये निराकृतत्वाच्च। व्यक्तीभविष्यतिचेदमुपरिष्टात्। शाब्दभावनायां लिङादिवाच्यत्वं व्यवस्थापयितुं शक्तिग्राहकमनुमानसामान्यमवतारयति यद् यस्मादिति। तथाच लिङ् प्रवृत्त्यनुकूलव्यापारवाचकः नियमेन तद्विषयकशाब्दधीजनकत्वादिति फलतो विशेषानुमाने पर्य्यवसानं विशेषानुमाने च व्यतिरेकिदृष्टान्तएव आदरणीयः। सामान्यतोऽनुमाने दृष्टान्तमुपन्यस्यति यथेति। ननु लिङादिशब्दश्रुतेरनन्तरं प्रवृत्तेरानुभविकत्वेन प्रवृत्तिजनकज्ञानविषयेष्टसाधनत्वादिकमेव सर्व्वानुभवसिद्धं तदर्थोऽस्तु भावनात्वेनरूपेण अलौकिकव्यापारादेर्लिङाद्यर्थताकल्पनन्तु न कथमपि सङ्गच्छते निष्प्रयोजनकत्वादिति चेत् अत्र मीमांसकाः न तावत् लिङोऽर्थ इष्टसाधनत्वं भवितुमर्हति देवदत्त काष्ठमाहरेरित्यादि गुर्व्वादेश्शब्रवणसमनन्तरं देवदत्तस्य गुरुप्रेरितोऽहं काष्ठमाहरामि न मे काष्ठाहरणमिष्टसाधनं इत्यादि ज्ञानवतोऽपि तदाहरणादौ लोके प्रवृत्त्युपलब्धेः इष्टसाधनत्वबोधतात्पर्य्येण लिङादिकमनुच्चारयतोऽपि गुर्व्वादेः तत्र प्रवर्त्तकत्वव्यवहारसिद्धेश्च। न च इष्टसाधनताशक्ततावच्छेदकलिङ्त्वाद्यवच्छिन्नोच्चारयितृत्वेन गुर्व्वादौ प्रवर्त्तकत्वव्यवहार उपपद्यतामिति वाच्यं ततोऽपि

नृपतिप्रेरितपुरुषोच्चारितलिङ्श्रवणानन्तरं प्रवर्त्तमानं पुमांसं प्रति तथाविधपुरुषस्य वस्तुतोऽप्रवर्त्तकस्य प्रवर्त्तकत्वव्यवहारापत्तेर्दुष्परिहरणीयतापातात्, नच अन्याप्रेरितत्वे सति तादृशलिङाद्युच्चारयितृत्वं एव प्रवर्त्तकत्वमस्तु तावतैव प्रदर्शितापत्तिपरिहारसम्भवात् इतिवाच्यं तथा सति पिशुनजनप्रेरितस्य स्वजनं प्रवर्त्तयतो लिङाद्युच्चारयितुर्नरपतेः प्रवर्त्तकत्वव्यवहारानुपपत्तेः। तदेवं प्रवृत्तिकारणीभूतविलक्षणाभिप्रायविशेषवत्त्वेनैव तत्र तत्र प्रवर्त्तकव्यवहारस्यावश्यमङ्गीकरणीयतया तादृशाभिप्रायविशेष एव लोके लिङादिशब्दवाच्यत्वं अङ्गीकरणीयं वेदस्य तु कृत्स्नस्य नित्यत्वेन अपौरुषेयतया तत्रत्यलिङादीनां अनायत्या प्रवृत्त्यनुकूलव्यापारत्वेन साधारणधर्म्मेण कस्मिंश्चिदलौकिकव्यापारे शक्तिकल्पना साधीयसीति सिद्धं लोकवेदसाधारणं लिङादिशक्यतावच्छेदकं प्रवर्त्तनात्वं तदेव च भावनात्वमिति गीयते मीमांसकसिद्धान्तानुसारिभिः इति सुधीभिरवसेयम्, ये तु किल तार्किकम्मन्या बलवदनिष्टाननुबन्धित्वमपि मन्यन्ते लिङर्थं, न खलु ते श्रद्धेयगिरोभवितुमर्हन्ति बलवदनिष्टाननुबन्धित्वज्ञानाभाववतामपि पुंसां प्रवृत्तेरानुभविकत्वात् बलवदनिष्टानुबन्धित्वज्ञानं हि प्रवृत्तिं प्रतिबध्नाति तदभावस्य स्वरूपसन् एव प्रवृत्तिं प्रति कारणभावं भजते नचास्ति तत्र तज्ज्ञानस्याप्यपेक्षणीयता इति स्वयमेव तैरसूयां परि-

T

स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः । वैदिकवाक्ये तु पुरुषाभावात् लिङादिशब्दनिष्ठएव । अतएव शाब्दीभावनेति व्यवह्रियते ! सा च भावना अंशत्रयमपेक्षते । भाव्यं साधन मितिकर्त्तव्यताञ्च ।

---

हृत्यावधानतोनिरूपणीयमिति विरम्यते प्रकृतमधुनानुसरामः ।

यद्यपि प्रवृत्त्यनुकूलव्यपारत्वमेव प्रवर्त्तनात्वं भावनात्वं वा लिङादिपदशक्यतावच्छेदकत्वेनेहोपात्तं तथापि अन्वयव्यतिरेकतः लाघवाच्च कारणत्वादिवत् अखण्डं व्यापारत्वमेव लिङादिपदशक्यतावच्छेदकं अङ्गीकरणीयं, नचैवं पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना इति मूलं कथमुपपद्यते इति वाच्यं तत्रापि व्यापारविशेषः शाब्दीभावना इत्येतावदेव लक्ष्यलक्षणबोधकं वाक्यं पुरुषेत्यादिपदानि तु उपलक्षणतया तस्यैव व्यापारविशेषस्य परिचायकानीति अवश्यमभ्युपेयमन्यथा सा च भावना अंशत्रयमपेक्षते इत्याद्युत्तरग्रन्थासङ्गतिः दुष्परिहरणीया स्यात् अंशत्रयान्तर्गतभाव्यस्य पुरुषप्रयत्नस्य शाब्दभावनायाएव अन्तर्गतत्वेन पुनर्लिङर्थशाब्दभावनायाः आख्यातार्थप्रयत्नानापेक्षाकथनस्य उन्मत्तप्रलापापत्तेरिति सुधीभिर्निपुनमवसेयम् ।

तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थीभावना साध्यत्वेनान्वेति एकप्रत्ययगम्यत्वेन

अतएवेति शब्दनिष्ठत्वादेव इत्यर्थः। एतच्च अभिधां भावनामाहुरन्यामेव लिङादय इति वार्त्तिककृन्मतानुसारेणोक्तमिति ध्येयम्। तत्र च अभिधीयते अनयेति व्युत्पत्त्या अभिधापदेन लिङादिशब्द उच्यते तस्य व्यापारविशेषः भावना तां स्वनिष्ठां अन्यामर्थभावनाविलक्षणां लिङादयः प्रत्यया आहुरिति तात्पर्य्यम्। सा निरुक्ता शाब्दीभावना, अंशत्रयमिति अंशपदेनाच स्त्रोत्थाप्याकाङ्क्ष-निवर्त्तकज्ञानविषयोग्राह्यः स्व' शाब्दीभावना लिङाद्यर्थशाब्दभावनाबोधोत्तरं साध्याद्याकाङ्क्षां अभिनयति किमित्यादिना वक्ष्यमाणं यत् अंशत्रयं तदुपेता आर्थीभावना सापि वक्ष्यमाणपुरुषप्रवृत्तिरूपा सा च शाब्दभावनायाः साध्यीभूता तावदेव शाब्दभावनाव्यापारः यावत् पुरुषः कश्चन नियोज्यीभूतो न प्रवर्त्तते इत्याद्यभियुक्तोक्तेरिति भावः प्रवृत्तस्तु पुरुषः यागादिना स्वप्रवृत्तिप्रयोजकज्ञानविषयं स्वर्गादिकं स्वयमेव साधयिष्यतीति न तत्र स्वर्गादिफले शाब्दभावनाभाव्यत्वं अङ्गीकर्त्तुमुचितमिति विभावनीयम्। ननु स्वर्गकामो यजेतेत्यादिवाक्ये स्वर्गादेरपि आर्थभावनावत् शब्दोपात्तत्वात् परम्परया च शाब्दभावनाप्रयोज्यत्वात् कथं न शाब्दभावनाया भाव्यत्वेनान्वयः स्यादित्यत आह एकप्रत्ययेति।

T

समानाभिधानश्रुतेः। संख्यादीनामेकप्रत्ययगम्यत्वेऽपि अयोग्यत्वान्न साध्यत्वेनान्वयः। साधनाकाङ्क्षायां

---

योग्यत्वेऽपि यागस्वर्गादेः भिन्नवाचकोपस्थितत्वेन अभिन्नवाचकोपस्थापितया आर्थभावनया व्यवहितत्वात् न साध्यत्वेनान्वयः सम्भवति योग्यतावत् सन्निधेरपि शाब्दान्वयप्रयोजकत्वादितिभावः एकः प्रत्ययः लिङ्-स्वरूपः तत्प्रतिपाद्यत्वेन समानाभिधानश्रुतेः लिङादि-रूपायाः सत्त्वादिति भावः एकपदश्रुत्यपेक्षया समानाभि-धानश्रुतेर्बलवत्त्वादिति तात्पर्य्यं व्यक्तीभविष्यति चेदमुप-रिष्टात् श्रुतिविचारावसरे। ननु संख्यादीनामपि एक-लिङादिप्रत्ययगम्यत्वेन कुतो न शाब्दभावनाभाव्यत्वं इत्यत आह संख्यादीनामिति, अयोग्यत्वात् बाधितत्वात्, न खलु सन्निधिमात्रं अयोग्यस्य अर्थस्य अन्वयमनुभावयितु मर्हतीति भावः। संख्याहि द्वित्वादिका अपेक्षाबुद्धिजा एकत्वं च नित्ये नित्यं अनित्ये स्वाश्रयसामग्रीजन्यं स्वा-श्रयनाशकनाश्यञ्च तथाच न कस्याश्चिदपि संख्यायाः शाब्द-भावनाजन्यत्वं प्रामाणिकमिति भावः। पुरुषार्थानु-कूलार्थभावनायां शाब्दभावनाभाव्यत्वान्वयं व्यवस्थाप्य अन्यस्य च करणस्य अदर्शनात् लिङादिज्ञानमेव करणत्वे-नान्वेतीति व्यवस्थापयितुमाह साधनाकाङ्क्षायामि-त्यादि।

लिङादिज्ञानं करणत्वेनान्वेति तस्य च करणत्वं न भावनोत्पादकत्वेन तत्पूर्व्वमपि तस्याः शब्दे सत्त्वात्। किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्त्तकत्वेन वा।

---

लिङादिज्ञानमित्यस्य तादृशप्रवर्त्तनाख्यव्यापारवत्त्वेन लिङादिज्ञानमित्यर्थः अगृहीतलिङभिधेयस्य पुंसः लिङ्श्रवणेऽपि प्रवृत्तेरदर्शनात् तथाच शाब्दीभावनायाः स्वज्ञानमेव करणमित्यभ्युपेयम् जनकत्वसम्बन्धेन व्यापारवत्त्वेसति विलक्षणकारणत्वरूपस्य करणत्वस्य तु लिङादिज्ञानरूपे करणशब्दाभिधेये न सम्भवति व्यापारस्य शाब्दभावनायाः मीमांसकैर्नित्यत्वाभ्युपगमात् इति करणत्वमत्र विलक्षणमेव वक्तव्यं तदेव प्रकटयति तस्य च करणत्वमित्यादिना। तस्य लिङादिज्ञानस्य भावनोत्पादकत्वेन व्यापारत्वेनाभिमतभावनाजनकत्वेन इति भावः तत्र हेतुमाह तत्पूर्व्वमिति। तस्य लिङादिज्ञानस्य पूर्व्वं प्राक् तस्याः शाब्दभावनायाः शब्दे लिङादिरूपे सत्त्वात् नित्यत्वेनेति शेषः। ज्ञापकत्वेनेति। लिङ् मत्प्रवृत्त्यनुकूलव्यापारवान् इत्यादि विशिष्टधियं प्रति विशेषणज्ञानवत् विशेष्यज्ञानस्यापि हेतुत्वेन शाब्दभावनाज्ञानजनकत्वरूपं तत्करणत्वं लिङादिशब्दज्ञाने अक्षतमेवेति भावः।

ननु तद्विषयकज्ञानजनकस्य तत्करणत्वं न क्वाप्यानु-

T

इतिकर्त्तव्यता-काङ्क्षायामर्थवादज्ञाप्य-प्राशस्त्य-मितिकर्त्तव्यतात्वेनान्वेति । प्रयोजनेच्छाजनित-क्रियाविषयव्यापारआर्थीभावना सा च आख्या-

---

भविकं न वा विचारसहमन्यथा धूमादिज्ञानस्यापि वह्निं प्रतिकरणत्वापत्तेः इत्यतः करणत्वमन्यथा निर्व्वाह्यं शाब्द-भावनाभाव्येति ।

शाब्दभावनाया भाव्यं यत्पुरुषप्रवृत्तिरूपं तन्निर्वर्त्तक-त्वेन तत्प्रयोजकत्वेन इत्यर्थः । अत्र च पुरुषप्रवृत्तिनिर्व्वर्त्त-कत्वं लिङादिज्ञानस्य स्वजन्यकृतिसाध्यत्वेष्टसाधनत्वाद्यनु-मितिद्वाराबोध्यं,भवति च वैदिकशब्दश्रवणसमनन्तरं नियो-ज्यस्य लिङादिप्रत्ययप्रकृतिभूतयजिप्रभृतिधात्वर्थे विलक्षण-कर्म्मविशेषे प्रवृत्तिप्रयोजकेष्टसाधनत्वाद्यनुमानं ततश्च कृति-साध्यत्वप्रकारिकेच्छा ततश्च प्रवृत्तिरित्यवसेयम् । इद-मत्राकूतम् न खलु सर्व्वत्र व्यापारजनकमसाधारणकारण-मेव करणमिति करणलक्षणं भवितुमर्हति समवायस्य नित्यतावादिनये व्यापारीभूतसमवायसंयुक्तसमवायादेर-जनके श्रोत्रचक्षुरादौ करणशब्दप्रतिपाद्ये तल्लक्षणायो-गात् तथाच रूपादिसाक्षात्कारं प्रतिचक्षुरादेः करणत्व-निर्व्वाहाय अन्यथैव निर्व्वचनीयं करणसामान्यं इत्यच्च जनकत्वसम्बन्धमपहाय स्वजन्यकार्य्यजनकत्वं एव व्यापा-रस्य सम्बन्धमभ्युपेत्य तादृशसम्बन्धेन व्यापारवत्त्वे सति

T

तत्वांशेनोच्यते आख्यातसामान्यस्य व्यापारवाचित्वात् । साऽप्यंशत्रयमपेक्षते साध्यं साधनमिति कर्त्तव्यताञ्च ।

---

असाधारणं कारणमेव करणशब्दव्यपदेश्यमस्तु तावतैव बहुसामञ्जस्यं सम्भवेत् तथाच लिङादिज्ञानस्यापि भावनासाध्यप्रवृत्तिजनकस्य तादृशस्वर्गाद्यनुकूलविलक्षणप्रवृत्तिं प्रति असाधारणकारणस्य भावनारूपव्यापारं प्रति करणत्वमनायासेन निर्व्वहतीति सुष्टूक्तं ग्रन्थकृता भावनाभाव्यनिर्व्वर्त्तकत्वेन लिङादिज्ञानस्य करणत्वमिति परैरपरिशीलितोऽयं रमणीयोनूतनस्य समाधिरिति सुधीभिः स्वयमूहनीयमिति ।

ननु लिङादिज्ञानं चेत् प्रवृत्तिप्रयोजकं तर्हिंव्युत्पन्नस्य सर्व्वस्यैव पुंसः कथं न यागादौ प्रवृत्तिरुपलभ्यते इत्याशङ्क्य तस्य तस्य खलु पुंसः प्राशस्त्यज्ञानरूपेति कर्त्तव्यताशब्दप्रतिपाद्यविशेषकारणविरहेण न भवति यागादौ प्रवृत्तिरिति उत्तरयन् छलतदितिकर्त्तव्यतां दर्शयति इतिकर्त्तव्यतेति इतिशब्दोऽत्र प्रकारपरः प्रकारस्य सामान्यस्य भेदको विशेषएव तथाच कर्त्तव्यापरनामधेयावश्यानुष्ठेयोपायविशेषएवात्र प्राशस्त्यादिरूपः शाब्दभावनायामितिकर्त्तव्यतात्वेनान्वेति कर्त्तव्यसामान्यमत्र लिङादिज्ञानरूपं भावनाकरणमेव प्राङ्निरुक्तमव-

सेयं। तस्य इति कर्त्तव्यतारूपस्य प्राशस्त्यादे र्ज्ञापकोऽर्थ-वाद इति बोधनाय अर्थवादेति, तस्य च अर्थवादस्य अवान्तरभेदाः अर्थवादनिरूपणावसरे निरूपणीयाः। ननु किमिदं प्राशस्त्यं नाम यस्य खलु प्रवृत्त्युपयोगितया अव्दभावनायामितिकर्त्तव्यतात्वेन भवद्भिरन्वयोऽभ्युपगम्यते विधेयतावच्छेदकयागत्वादिसामानाधिकरण्येन वलवदनिष्टाननुवन्धित्वे सति इष्टजनकत्वं एव तद् इति ब्रूहाण एतादृशमेव प्राशस्त्यं विध्यर्थवादवाक्यतो लक्षितं भवति निषेधार्थवादस्थले तु निषेध्यतावच्छेदकहिंसात्वादिसामानाधिकरण्येन क्रियादृष्टफलापेक्षया वलवत्तरदुःखसाधनत्वरूपं अप्राशस्त्यं निषेधार्थवादेन लक्षितं भवति।

तदिदं प्राशस्त्यंच विधिनिषेधार्थवाक्याभ्यां एव लक्षणया वोध्यते नच वाक्यघटकमेतदेवपदं लाक्षणिकं इतराणितुपदानि तात्पर्य्यग्राहकाणि इतिन्यायमतमेव साधीयस्तया आश्रयणीयमितिवाच्यं वाक्ये लक्षणाङ्गीकारे वाधकविरहात् पदलक्षणाङ्गीकारपक्षे एकेनैवपदेन तात्पर्य्यग्रहसम्भवे वह्नां पदानामानर्थक्य प्रसङ्गात् वाक्यघटकत्वाविशेषेण एतत् पदं लाक्षणिकं अन्यानि च न लाक्षणिकानि इत्यत्र विनिगमनाविरहेण निश्चिततया यत्किञ्चित्पदधर्म्मिकलक्षणाग्रहस्यासम्भवेन लक्ष्यार्थस्योपस्थित्यसम्भवाच्च। तदिदं प्राशस्त्यं स्वविषयकज्ञानजन्येष्टविषयकवलवद्रागजन्यप्रवृत्तिभाव्यकत्वसम्बन्धेन शाब्द-

किं भावयेत् केन भावयेत् कथम्भावयेदिति तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति, साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमिति कर्त्तव्यतात्वेनान्वेति ।

---

भावनायामेवान्वेति अप्रामाण्यमपि निषेधार्थवादस्थले स्वविषयकज्ञानजन्यानिष्टविषयकबलवद्द्वेष-प्रयोज्याभावप्रतियोगिप्रवृत्तिभाव्यकत्वसम्बन्धेन तत्रैवेति सुधीभिः स्वयं अन्यदूहनीयम् ।

अर्थभावनां लक्षयति प्रयोजनेति प्रयोजनं स्वर्गादिरूपं फलम् तत्र या इच्छा तया जनितो यो यागादिक्रियाविषयको व्यापारः पुरुषप्रवृत्तिरूपः सएवार्थीभावना इतिगीयते सा आर्थी भावना आख्यातत्वांशेन उच्यते आख्यातत्वावच्छिन्नवाचकता निरूपितवाच्यतावती इतिभावः आख्यातस्य आर्थभावनाबोधकत्वे प्रमाणमुपन्यस्यति आख्यातेति । आख्यातसामान्यस्य आख्यातत्वावच्छिन्नस्य व्यापारवाचित्वात् धात्वर्थातिरिक्तनियतधात्वर्थसम्बद्धप्रवर्त्तनापरनामकव्यापारविषयकशाब्दधीजनकत्वात् इति तात्पर्य्यम् ।

शाब्दभावनावद् आर्थभावनाया अपेक्षितमंशत्रयं अभिनयति किं भावयेत् इत्यादिना तत्र साध्यादीनां



T

त्रयाणां भावनांशानां मध्ये इति भावः साध्याकाङ्क्षायां जातायामितिशेषः स्वर्गादिफलम् अधिकारिविशेषणतया उपस्थितमपि आख्यातार्थभावनायाः साध्यत्वेनान्वेति पुरुषार्थत्वात् साधनाकांक्षायां एकपदोपात्तं यागादिकं करणत्वेनान्वेति अत्रापि करणत्वं पूर्ववत् ग्राह्यं कृति-साध्यस्वर्गादिफलं प्रति प्रयाजादिव्यापारद्वारा यागादेर-साधारणकारणत्वस्य प्रकृतेऽवाधात् कुठारेण च्छिन्द्यात् इत्यादिवाक्यश्रुतेरनन्तरं कथं छेदनं भवेत् इत्याद्याकांक्षायां उद्यम्य निपात्यच इत्यादि वाक्यश्रवणात्परं यथा उद्यम-निपातनयोरितिकर्त्तव्यतात्वेनान्वयो भवेत् तथा अत्रापि कथं यागेन स्वर्गं भावयेत् इत्याकांक्षायां प्रयाजावघाता-दिभिरङ्गजातैरुपकृतेन यागादिना स्वर्गं भावयेत् इत्या-दिबोधः सम्पद्य तथाविधाकांक्षां निवर्त्तयति इति दर्श-यितुमाह इतिकर्त्तव्यतेति तथाचात्र यजेतस्वर्गकाम इत्यादिस्थलेस्वर्गभाव्यक प्रयाजादीतिकर्त्तव्यताक यागकर-णकार्थभावनाभाव्यक लिङ्ज्ञानकरणक प्राशस्त्यादीतिक-र्त्तव्यताकशाब्दभावना इत्यादिरूपः शाब्दबोधः खलु मीमां-सकमते सम्पद्यते इति बोध्यम् इदमत्रावधेयं ननु अचिर-स्थायिनोयागादेः स्वर्गंप्रति यत्करणत्वं श्रूयते तत्कथ-मुपपद्यताम् नहि यागाद्यनुष्ठानाव्यवहितोत्तरकाल-मेव स्वर्गादिकमुत्पद्यते नचकार्य्यस्यप्राक्क्षणानवस्थायिनि वस्तुनि कारणत्वं सम्भवति इति चेत् अत्र मीमांसकाः

लौकिकप्रत्यक्षा-विषयस्यलोकान्तरभाविनःस्वर्गादेर्यागादि-निष्ठंप्रमितकारणत्वंकस्यचनअलौकिकस्य व्यापारविशेषस्य कल्पनमन्तरेणानुपपद्यमानं श्रुतार्थानुपपत्त्या कल्पयति पुरुषनिष्ठंअपूर्वाख्यंव्यापारविशेषं दृष्टञ्चैतल्लोके यथा स्मृतिं प्रति अनुभवस्य प्रमितं करणत्वमनुपपद्यमानं कल्पयति संस्काराख्यं व्यापारविशेषं पुरुषनिष्ठं, तदेवापूर्व्वं पुरुष-निष्ठं अदृष्टमिति भाग्यमिति च गीयते तत्त्वविद्भिः। तच्चापूर्व्वं द्विविधं पापं पुण्यञ्चेति तत्र निषिद्धकर्म्मानुष्ठा-नात् विहितस्य च अकरणात् पापाख्यं अदृष्टमुत्पद्यते-दुःखभोगाय, विहितकर्म्मानुष्ठानात् पुण्याख्य मुत्पद्यते सुखभोगाय, तत् पुनः प्रत्येकं चतुर्व्विधं फला पूर्व्वं समुदायापूर्व्वं उत्पत्त्यपूर्व्वं अङ्गापूर्व्वञ्चेति तत्र दर्शपूर्ण-मासौ जुहोति इत्यादिविधिबोधितयावत्कर्म्मानुष्ठाना-नन्तरं फलाय उत्पद्यमानं अपूर्व्वं परमापूर्व्वं तच्च दर्श-पूर्णमासविहिताग्नेयैन्द्रदध्यैन्द्रपयःस्वरूपसमुदायाग्नेयाग्नी--षोमीयोपांशुस्वरूपसमुदायद्वयेन जननीयं नच विभिन्न-कालिकयोस्तयोः संहत्यपरमापूर्व्वं प्रतिजनकभावः सम्भव-तीति अनुपपत्त्या ताभ्यां समुदायाभ्यां परमापूर्व्वजनकं अपूर्व्वद्वयं जननीयं तदेव च समुदायापूर्व्वमितिगीयते तयोश्चसमुदाययोर्मध्ये प्रत्येकसमुदायवर्त्तिनां आग्नेयादि-त्रयाणां यागानां क्रमिकतया संहत्य प्रत्येकसमुदाय-जन्यमपूर्व्वं प्रति जनकभावस्तु न सम्भवति इति तैः प्रत्येकं

T

अथ को वेद इति चेदुच्यते अपौरुषेयं वाक्यं वेदः स च विधि मन्त्र नामधेय निषेधाऽर्थवादभेदात्

---

समुदायापूर्व्वनिर्व्वाहाय विभिन्नमेकमेकमपूर्व्वमुत्पाद्यते तानि च त्रीणिमिलितानि समुदायापूर्व्वं जनयन्ति तान्ये-तानि खल्वपूर्व्वाणि उत्पत्त्यपूर्व्वपदेन उच्यन्ते उत्पत्त्यपूर्व्व-जनकतया अभ्युपगतानां आग्नेयादीनां यागानां क्रिया-प्रचयरूपाणां क्षणिकतया संहत्य तादृशापूर्व्वं प्रति जन-कत्वं नोपपद्यत इति तन्निर्व्वाहाय अङ्गभावापन्नप्रति क्रियाविशेषजन्यानि नाना अपूर्व्वाणि कल्प्यन्ते तान्येवच अपूर्व्वाणि अङ्गापूर्व्वपदेन उच्यन्ते इति ।

तदेवं यजेतेत्यादिवेदस्य स्वर्गादिरूपपुरुषार्थसाधन-त्वेन यागादिरूपधर्म्मप्रतिपादकतया प्रयोजनवदर्थप्रति-पादकत्वेन प्रामाण्यं व्यवस्थापितं भवति इति मन्तव्यं तस्य च वेदरूपप्रमाणस्य प्रमेयोऽर्थस्त्रिविधः क्रत्वर्थः पुरु-षार्थः उभयार्थश्चेति तत्र प्रयाजादिरङ्गसमूहः केवलं क्रत्वर्थतया गीयते स्वर्गादिरूपं मुख्यप्रयोजनं तत्करणं च यागादिकं पुरुषार्थपदेन उच्यते दध्ना इन्द्रियकामस्य जुहु-यात् दध्ना जुहोति इति वाक्यद्वयश्रुतेरेकस्य दध्न इन्द्रिय-रूपफलजनकतया उत्पत्तिविधिविहितहोमोपकारकतया च उभयार्थत्वमिति एवंविधो दध्यादिरुभयार्थ इतिगीयते इतिप्रसङ्गतः सङ्गतम् । प्रकृतमधुनानुसरामः ।

पञ्चविधः। तत्राज्ञातार्थज्ञापको वेदभागो विधिः
स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृश-
श्चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते।

---

ननु वेदप्रतिपाद्यप्रयोजनवदर्थं इति धर्म्मलक्षणमुक्तं
तत्र वेदशब्दार्थाज्ञाने न तावद् भवति धर्म्मलक्षण-
ज्ञानं नागृहीतविशेषणाबुद्धिर्विशेष्यमुपसंक्रामतीतिन्याया-
दिति वेदलक्षणं पृच्छति अथेति उत्तरयति उच्यते इति
अपौरुषेयमिति रामायणमहाभारतादावतिव्याप्तिवारणाय
अपौरुषेयमिति नित्येगगणादौ अतिप्रसक्तिवारणाय वाक्य-
मिति अथ किमिदमपौरुषेयत्वं वेदस्य पुरुषकर्तृकत्वा-
भाववत्त्वमेव अपौरुषेयत्वमिति तु न सम्भवति शब्दनित्य-
तावादिनये वेदवत् लौकिकानामपि शब्दानां कण्ठताल्वा-
द्यभिघातव्यङ्ग्यानांनित्यत्वेनपुरुषकर्तृकत्वाभावात् तत्रा-
तिव्याप्तेः अनित्यतापक्षे अध्यापकाध्येतृसम्प्रदायेषु पठ्य-
मानानां वेदत्वेन अङ्गीक्रियमाणानां तत्तदानुपूर्वी-
विशेषावच्छिन्नानां वर्णानामेतद्व्यवहारानुपपत्तिःदुष्परि-
हरणीयैव स्यात् तेषां पुरुषकर्तृकत्वात् नच स्वसजातीयो-
च्चारणानपेक्षोच्चारणकं तु यद्वाक्यजातं तदेव पौरुषेय-
मिति कथ्यते वेदोच्चारणं तु न तथाविधं तदुच्चारणं
पूर्व्वपूर्व्वस्वसजातीयोच्चारणमपेक्ष्य एव क्रियते इति सिद्ध-
त्वेव वेदे अपौरुषेयत्वमिति वाच्यं एवं सति इदानी-

T

सुज्ञार्थ्यमाणरामायणमहाभारतादौ अतिप्रसङ्गात् नच याद्दशानुपूर्व्वी स्वसजातीयोच्चारणापेक्षोच्चारणकवाक्यभिन्नाद्वत्तिः तद्वत्त्वमेव वाक्ये अपौरुषेयत्वं रामायणमहाभारतादिवाक्यवृत्तिस्तु आनुपूर्व्वी तथाविधा नभवति वाल्मीकिवेदव्यासादिभिः आदौ उच्चारितस्य वाक्यजातस्य स्वस्वजातीयोच्चारणानपेक्षोच्चारणकत्वात् वेदवाक्यस्य तु सर्व्वस्यैव स्वस्वजातीयोच्चारणानपेक्षोच्चारणकत्वाभावेन तद्गताया आनुपूर्व्व्याः तथाविधवाक्याद्वत्तित्वं सम्भवत्येव इति वाच्यं वेदगतानुपूर्व्वी स्वसजातीयोच्चारणापेक्षोच्चारणकवाक्यभिन्नाद्वत्तिभिन्ना वाक्यवृत्तित्वात् रामायणमहाभारतादिवृत्त्यानुपूर्व्वीवत् इति विरोध्यनुमानेन आनुपूर्व्वीमात्रेस्वसजातीयोच्चारणापेक्षोच्चारणकवाक्यभिन्नाद्वत्तित्वस्य वाधितत्वादिति चेदत्र मीमांसकाः वाक्यवृत्तित्वहेतुना आनुपूर्व्वीमात्रे स्वसमानजातीयोच्चारणापेक्षोच्चारणकवाक्यभिन्नाद्वत्तिभिन्नत्वानुमानं न भवितुमर्हति स्मर्य्यमाणप्रथमोच्चारयितृकवाक्यवृत्तित्वस्य उपाधित्वात् यदि तावद् वेदानां कर्त्ता कश्चन अभविष्यत् ततोऽवश्यमच्छेदपरम्परया वाल्मीकिव्यासवुद्धादिवत् जनास्तदर्थानुष्ठायिनो निश्चयेन तमस्मरिष्यन् नत्वस्य विस्मरणं सम्भवति तत्प्रत्ययेन सदा सर्व्वेषां वेदार्थानुष्ठानं, वेदप्रतिपाद्येषु कर्म्मजातेषु महाक्लेशधनव्ययादिसापेक्षेषु फलसाधनत्वं न खलु वेदातिरिक्तेनान्येन केनापि प्रमाणेन वोधयितुं

शक्यते नच सम्भवत्कर्तृकत्वे तन्निश्चयमन्तरेण प्रेक्षावान् जनः तादृशे महाक्लेशकरे कर्म्मणि प्रवर्त्तितुमर्हति अतः सकर्त्ता अवश्यं स्मर्त्तव्यः नचासौ स्मर्य्यते तेन स्मृतिदर्शन-योग्यत्वे सत्यदृश्यमानः कर्त्ता शशविषाणादिवदभावात्मना अध्यवसीयते ये हि किलतार्किकम्मन्या वेदपौरुषेयता-मानिनः तेऽपि नैव शक्नुवन्तः परम्परयापि स्मर्त्तुं कर्त्तृ-विशेषं सामान्यतो दृष्टेनानुमानेन केवलं कर्त्तारमनुमाय स्वाभिमतं कर्त्तारमीश्वरं तत्र निक्षिपन्ति नचैतावता तद्-वचांसि श्रद्धेयभावं भजन्ते उपदर्शितोपाधिना सामा-न्यतोऽनुमानस्य दूषितत्वात्तदेवोक्तमभियुक्तैः वाक्यत्वात् पौरुषेयत्वं दृश्यादर्शनबाधितं । प्रत्ति हेतुविरुद्धस्य हेतु-स्तस्मादकृत्रिम इति । एतादृशनिष्कृष्टापौरुषेयत्वनिर्व्व-चनपक्षे प्रागुक्तवेदलक्षणे वाक्यमिति यदुक्तं तदेतादृशा-पौरुषेयत्वलाभाय इति द्रष्टव्यं नतु स्वातन्त्र्येण लक्षणे तत्प्रवेशः सम्भवति निष्प्रयोजनकत्वादितिध्येयम् ।

तदेवं लक्षणतो निरुक्तं वेदं विभजते सचेति विधिं प्रथमत उद्दिष्टं लक्षयति तत्रेति तत्र पञ्चविधवेदांशेषु मध्ये इति भावः यस्मिन् खलु वस्तुनि पुरुषप्रवृत्त्यौपयिकमिष्ट-साधनत्वं मानान्तरेणाप्राप्तं तादृशेष्टसाधनत्वेन तद्वस्तु प्रतिपादको वेदभागो विधिरिति सचेत्यादि विधत्ते इत्यन्तग्रन्थस्य पर्य्यवसितोऽर्थः एतादृशविधेरुदाहरणमाह यथेत्यादिना नन्वेवं दध्ना जुहोति इत्यादौ विधिलक्षणा-

यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इति विधि-र्मानान्तरेणाप्राप्तस्वर्गप्रयोजनवद्धोमं विधत्ते । अग्नि-होत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः । यत्र कर्म्म मानान्तरेणप्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते यथा दध्ना जुहोतीत्यत्र होमस्य अग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वात् होमोद्देशेन दधिमात्र विधानं दध्ना होमं भावयेदिति । यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते यथा सोमेन यजेतेत्यत्र सोम-यागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम् । १

---

योगः तत्र अग्निहोत्रं जुहुयादिति विधिनैव होमस्य प्राप्तत्वादित्याशङ्क्य होमस्य प्राप्तत्वेऽपि दध्यादिगुणस्य इष्ट-साधनत्वबोधकतया गुणविधित्वेन तत्र विधिरूपत्वं सम्भ-वतीत्याह यत्रेति ।

दधिमात्रविधानं दधिकरणकत्वमात्रविधानं विशिष्ट विधिस्वरूपं लक्षयति यत्रेति उभयं शेषशेषिलक्षणं गुण प्रधानरूपमुभयमितिभावः विशिष्टं गुणविशिष्टं प्रधान मित्यर्थः ननु यथा अग्निहोत्रं जुहुयादित्यत्र अग्निहोत्रेण होमेनेष्टं भावयेदितिवाक्यार्थसम्पत्त्या होममात्रस्य विहित-तया उत्पत्तिविधिरूपत्वमङ्गीक्रियते अत्रापि सोमेन यागेन इष्टं भावयेदितिवाक्यार्थसम्पत्त्या उत्पत्तिविधित्वमेव कथं नस्यात् इत्याशङ्कायामाह सोमेनि ननु गुणप्रधानरूपद्वय-

सोमपदेमत्वर्थलक्षणया सोमवता यागेनेष्टं भावये-दिति वाक्यार्थबोधः। नचोभयविधाने वाक्यभेदः प्रत्येकमुभयस्याविधानात् किन्तु विशिष्टस्यैव विधानात्। नच ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिना प्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्त्विति वाच्यं तस्याधिकारविधित्वेन उत्पत्तिविधित्वासम्भवात्।

---

विधाने वाक्यभेदप्रसङ्गः नचेष्टापत्तिरितिवाच्यं व्रीहिभिर्यजेतयवैर्वा इत्यादिवत् वाक्यभेदाङ्गीकारे दोषाष्टकप्रसङ्गात्। यद्वा ननु यागेन इष्टं भावयेत् सोमेन च यागं भावयेत् इत्यावृत्त्या उभयविधवाक्यार्थाङ्गीकारे आवृत्तिलक्षणो वाक्यभेदः प्रसज्येत युगपत् तन्त्रेण यागेनेष्टं भावयेत् सोमेन यागं भावयेदित्युभयविधबोधस्वीकारे तु विरुद्धत्रिकद्वयप्रसङ्ग इत्याशङ्कायामाह नचेति सोमपदस्य मत्वर्थलक्षणाङ्गीकारेण सोमवतायागेनेष्टं भावयेदित्येवं रूपः विशेषणविशिष्टविलक्षणयागरूपैकविधेय-मात्रविषयकोबोध एव अङ्गीक्रियते तथाच न पूर्वोक्तदोषाणामवकाशः विशेषणविशेष्य भावानापन्नमुभयं यत्र विधीयते तत्रैव प्रागुक्तवाक्यभेदस्यावसरः इति तु तात्पर्य्यम् इदमेव व्यक्तीकरोति किन्त्विति ननु ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादि वाक्यप्राप्तज्योतिष्टोमाख्यं होममनूद्य सोमस्य गुणत्वं एव

ननु उद्भिदायजेत पशुकाम इत्यस्येव ज्योतिष्टोमेनेत्यस्याप्युत्पत्त्यधिकारविधित्वमस्त्विति चेन्न दृष्टान्ते उत्पत्तिवाक्यान्तरस्याभावेन अन्यथानुपपत्त्या तथात्वाश्रयणात् । किञ्च ज्योतिष्टोमेनेत्यस्य उभयविधित्वे अनेनैव यागस्तस्य फलसम्बन्धोऽपि बोधनीय इति सुदृढोवाक्यभेदस्तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम् ।

---

स्वीक्रियताम् दध्ना जुहोतीत्यादौ दध्यादेरिव तथाच सोमेन यजेतेत्यादेर्गुणविधित्वेनैवोपपत्तौ व्यर्थं विशिष्टविधिकल्पनं इत्याशङ्क्य परिहरति नचेति अधिकारविधित्वेन इति यागस्तुद्दिश्य प्रमाणान्तरप्राप्तफलमात्रविधायकत्वेन इति भावः तथाच ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यतो न तावत् विधेयत्वेन यागस्वरूपं विज्ञायते उत्पत्तिवाक्येन विधेयतया बोधित एव यागे गुणविधिना दध्ना जुहोतीत्येवं रूपेण दध्यादेर्गुणत्वं विधीयते विधेयतावत्त्वेन अप्राप्ते कर्मणि गुणविधानन्तु न दृष्टचरमितिभावः । दृष्टान्तवत्वेन ज्योतिष्टोमस्यतूभयविधित्वं व्यवस्थापयितुं शङ्कते नन्विति उद्भिदाख्ययागस्य यथा उत्पत्तिविधित्वमधिकारविधित्वञ्च प्रामाणिकं तद्वदत्रापि ज्योतिष्टोमादौ उत्पत्त्यधिकारोभयरूपत्वमङ्गीक्रियतां इति शङ्कार्थः । दृष्टान्तवैषम्य-

विधिश्चतुर्व्विध उत्पत्तिविधिर्व्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति तत्र कर्म्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः यथा अग्निहोत्रं जुहोतीति अत्र विधौ कर्म्मणः करणत्वेनान्वयः अग्निहोत्रहोमेनेष्टं भावयेदिति ।

---

प्रदर्शनेन तामिमां शङ्कां परिहरति दृष्टान्ते इति उद्भिदायजेतपशुकाम इत्यादौ कर्म्ममात्रस्वरूपबोधकविधिवाक्यान्तरासत्त्वेन एकस्यैव वाक्यस्य अनायत्या उभयविधित्वाङ्गीकारेण स्वीकृतः कथञ्चित् वाक्यभेदः अत्र च प्रमाणान्तरेण प्राप्तस्य यागस्य फलसम्बन्धबोधकतयैव ज्योतिष्टोमादिवाक्यस्य प्रामाण्यसम्भवे निरर्थको वाक्यभेदकल्पनाप्रयास इति तात्पर्य्यमवसेयम् लक्षणात्मकपददोषापेक्षयावाक्यभेदस्थले पदसमूहात्मकाश्रूयमाणवाक्यान्तरकल्पनाया अधिकदोषतया ज्योतिष्टोमादिवाक्यस्य उभयरूपतामनङ्गीकृत्य सोमपदस्य मत्वर्थीयलक्षणाङ्गीकारपक्ष एव श्रेयान् इति समाधानान्तरं अपि दर्शयति किञ्चेति ।

लक्षणतो निरुक्तं विधिं विभजते विधिरिति तच्च चतुर्व्विधेषु विधिषु कर्म्मस्वरूपमात्रेत्यादि उत्पत्तिविधेर्लक्षणं अत्रमात्रपदेन उत्पत्तिविधेः कर्म्मणां फलसम्बन्धवोधकत्वं व्यावृत्तं भवतीतिध्येयम् । उद्भिदा यजेतपशुकाम इत्य-

T

धिकारविधेः परमार्थतस्तु कर्म्मस्वरूपमात्रबोधकत्वं शास्त्रतः सिद्धं कर्म्मस्वरूपमात्रबोधकविध्यन्तराभावेन तु उत्पत्ति-विधित्वं आर्थिकमेव इति नासङ्गतिः। उत्पत्तिविधे-रुदाहरणमाह यथेति इदमुपलक्षणं द्वितीयाध्याये प्रद-र्शितानां सोमयागवैश्वदेवाग्नेयाष्टाकपालादीनां अपि कर्म्मणां प्रकाशकस्य सोमेन यजेतेत्यादिविधिवाक्यस्य उदाहरणत्वमवसेयम् ननु अत्र उत्पत्तिविधौ कर्म्मणो यागादेरार्थभावनायां साध्यत्वेनैवान्वयः समुचितः योग्य-त्वात् अग्निहोत्रहोमं कुर्य्यात् इति व्रीहीन् प्रोक्षतीतिवत् अग्निहोत्रं जुहोतीत्यत्रापि द्वितीयायाः साध्यत्वबोधकत्वात् तथाच सति साध्यस्य साध्यत्वस्वभावादेव साध्यान्तराकाङ्क्षा विरहेण साध्यान्तरान्वयासम्भवात् अधिकारविधिबोध्य-फलसम्बन्धबोधोऽनुपपन्नएव स्यात् इत्याशङ्कायामाह अत्रेति अग्निहोत्रहोमेनेष्टं भावयेदितिकरणत्वेनान्वयाङ्गीकारे तु साध्याकाङ्क्षाया उत्थितिसम्भवेन भवति अधिकारविधि-बोध्यफलसम्बन्धावगमो निष्प्रत्यूह एवेति समुदायतात्पर्य्य-मवसेयं। ननु उत्पत्तिविधौ स्वर्गादिरूपेष्टबोधकशब्दा-भावात् अग्निहोत्रहोमेनेष्टंभावायदितिवाक्यार्थ बोधः कथं सम्पद्यते इति चेन्न विधेरेव तादृशेष्टाक्षेपकत्वात् अन्यथा तस्य अपुरुषार्थभूते कर्म्मणि पुरुषप्रवर्त्तनानुपपत्त्या अनु-ष्ठानलक्षणाप्रामाण्य प्रसक्तेः। अथाग्निहोत्रं जुहोतीत्यस्य उत्पत्तिविधित्वं न सम्भवति द्रव्यदेवतात्मक कर्म्मस्वरूप-

T

ननु यागस्य द्वेरूपे द्रव्यं देवता च, तथाच रूपा श्रवणे अग्निहोत्रंजुहोतीतिकथमुत्पत्तिविधिः। अग्नि-होत्रशब्दस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेन्न रूपाश्रवणेऽपि अस्य उत्पत्तिविधित्वादन्यथा रूपश्रवणात् दध्नाजुहोतीत्ययमेवउत्पत्तिविधिः स्यात्।

---

निर्व्वाहकाङ्क्ष अवोधकत्वेन कर्म्मस्वरूपबोधकत्वायोगा-दितिशङ्कते नन्विति।

ननु अग्नये होत्रं यत्रेति बहुव्रीहिणा निष्पादि-ताग्निहोत्रशब्देनैव अग्निदेवताककर्म्मस्वरूपस्य बोधनस-म्भवे कथं देवतात्मकरूपाश्रवणाशङ्कासङ्गच्छतइत्याशङ्काया-माह अग्निहोत्रशब्दस्येति तत्प्रख्यन्यायेनेति प्रथमाध्या-यस्य चतुर्थपादे तत्प्रख्यन्यायचिन्तावर्त्ततेतत्रचाधिकरणे अग्निहोत्रादिशब्दानांयोगशक्त्यागुणविधायकत्वमाशङ्क्य गु-णानां देवतादीनां यदग्नये च प्रजापतये च इत्यादि-वाक्यान्तरतएव प्राप्तत्वेन नाग्निहोत्रादिशब्दा गुणविधा-यका अपितु कर्म्मनामान्येव ते इतिसमाहितं नाम्नूयता-सुत्पत्तिविधिवाक्ये कर्म्मणो द्रव्यदेवतात्मकं अवश्यापेक्षणीयं रूपं नैतावतास्य विधेः श्रुतं विधित्वं व्याहतं भवितुमर्हति श्रूयमाणविधिरूपत्वान्यथानुपपत्त्या कल्पनीयं खलु तादृशं रूपं आपाततः सामान्यतः कल्प्यमानस्य च तस्य तस्य द्रव्यादे-र्विशेषतो बोधाकाङ्क्षायां गुणविधिसन्नवर्णादिस्योभवति



T

तथाचाग्निहोत्रं जुहोतीतिवाक्यमनर्थकं स्यात्
अङ्गप्रधानभावबोधको-विधिर्विनियोगविधिः यथ
दध्ना जुहोति सहि तृतीयया प्रतिपन्नाङ्गभावस्
दध्नो होमसम्बन्धं विधत्ते दध्नाहोमं भावयेदिति
गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः। क्वचिदा
श्रयत्वेनापि यथा दध्ना इन्द्रियकामस्य जुहुयादि
त्यत्र दधिकरणत्वेनेन्द्रियं भावयेत् तच्च किं निष्ठ
मित्याकाङ्क्षायां सन्निधिप्राप्तहोम आश्रयत्वेनान्वेति

---

विशेषबोधइति काहानिरिति परिहरति रूपाश्रवणे
ऽपीति।

रूपाश्रवणमात्रेण अग्निहोत्रं जुहोतीत्यस्य उत्पत्ति
विधित्वास्वीकारे बाधकमाह अन्यथेति रूपश्रवणात् दधि
द्रव्यात्मकरूपश्रवणादित्यर्थः अस्तु दध्ना जुहोतीत्यस्य उत्
पत्तिविधित्वं काहानिरित्यतआह तथाचेति नचाग्नि
होत्रं जुहोतीत्यस्य वाक्यस्य नवैयर्थ्यमग्निरूपगुणस्य विधा
नात् गुणविधित्वमस्याङ्गीक्रियतामितिवाच्यं अग्निर्ज्योति
रित्यादिमन्त्रवर्णेन गुणस्य प्राप्तत्वात् अग्निहोत्रादिपदस्य
कर्मनामधेयरूपतायाः सयुक्तिकं सूत्रकृता व्यवस्थापित
त्वाच्च। अत्रेदं तत्त्वं दध्ना जुहोतीत्यस्य उत्पत्तिविधित्वं
कथमपि न सम्भवति तथा सति पयसा जुहोतीत्यस्य
अग्निहोत्र-प्रकरणीयस्यवैयर्थ्यं कर्मान्तरविधायकत्वंवाप्रसज्येत

होमस्यदध्ना-जुहोतीत्यनेनप्राप्तस्य दध्यवरुद्धत्वेन-तत्रपयोरूप-गुणविधानस्यासम्भात्। नचेष्टापत्तिः अनेकफलापूर्व्व-कल्पनाप्रसङ्गात् अग्निहोत्रवाक्यस्य उत्पत्तिविधित्वे तु दध्नाजुहोति पयसाजुहोतीत्यादिवाक्यानां खले कपोत-न्यायेन सामान्यतःप्राप्तेहोमे बहुगुणविधायकत्वेनाप्युप-पत्त्यानानेक-परमापूर्व्वकल्पनाप्रसङ्ग-स्तस्मादग्निहोत्र-वाक्य-स्यैवउत्पत्तिविधित्वमङ्गीकर्त्तुमुचितं न दध्यादिवाक्यस्येत्य-वधेयम्।

अवसरतो विनियोगविधिं लक्षयति अङ्गप्रधानेति अङ्गप्रधानसम्बन्धः शेषशेषिलक्षणः तद्बोधको विधिर्विनि-योगविधिः द्रव्यदेवतादयस्तावदङ्गपदेनोच्यन्ते प्रधान-पदेन उत्पत्तिवाक्यविहितयागहोमादयो बोध्यन्ते तेषां च गुणप्रधानानां द्रव्यादिहोमादीनां मिथः सम्बन्धविशेषः उपकार्य्योपकारकभावात्मकः विनियोगविधिना प्रका-श्यते तद्बोधकत्वेनैवविनियोगविधेःप्रामाण्यमिति सुनि-रूपितोऽर्थः विनियोगविधेरुदाहरणमाह यथेति स विनियोगविधिः ननु आख्यातार्थभावनायां धात्वर्थस्य करणत्वेनान्वयः-स्वारसिक-एवइतिदध्नाजुहोतीत्यत्र-होमस्य करणत्वेन अन्वयः अवश्यमङ्गीकरणीयः करणत्वं च विधे-यत्वं इत्यत्र विधेयत्वेनोपस्थितस्य होमस्य दधिगुणं प्रति उद्देश्यत्वेनान्वयाङ्गीकारे तत्र विरुद्धत्रिकद्वयापत्तिर्दुर्व्वा-रैव तथाहि फलमुद्दिश्य होमोविधीयते होममुद्दिश्य

एतस्य विधेः सहकारिभूतानि षट्प्रमाणा
श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि एत

च दधिविधीयत इति होमस्य विधेयत्वमुद्देश्यत्वञ्च ए
होममुद्दिश्य दधि उपादीयते अपूर्व्वमुद्दिश्य हो
उपादीयत इति होमस्य प्राधान्यं उपसर्ज्जनत्वञ्च
एवम् होममनूद्य दध्यादिर्विशेषणीक्रियते फलमनू
च होमो विशेषणीक्रियते इति होमस्य अनुवाद्यत्वं वि
षणत्वञ्चेति एकस्मिन् होमे युगपत्त्रिकस्य अन्वयास्यु प
अयोग्यतापत्तिः नचेष्टापत्तिरनुभवविरोधात् न खे
विधेयत्वमुद्देश्यत्वञ्च एकस्मिन् धर्म्मिणि एकदा परिज्ञा
भवति नच प्रथमतः होमस्य अपूर्व्वं प्रति विधेयत्वे
अन्वयः पश्चाच्च दध्याद्युद्देश्यत्वेन अन्वय इति वाच्यं स
दुच्चरितवाक्येन क्रमिकबोधद्वयाङ्गीकारे वाक्यभेदापत्त
रित्यत आह गुणविधारिति साध्यत्वेन उद्देश्यत्वेनैव इत्य
तथाच दध्ना जुहोतीत्यत्र धात्वर्थस्य उद्देश्यत्वेनैवान्वया
नोक्ताशङ्काया अवतार इति भावः। नन्वेवं आख्याता
भावनायां धात्वर्थस्य विधेयत्वेनान्वयनियमव्याघातप्रस
इति चेन्न यत्र धात्वर्थस्य विधेयत्वं प्रमाणान्तरानधिग
तत्रैव आख्यातार्थभावनायां धात्वर्थस्य विधेयत्वेनान्व
स्वीकारादत्र च उत्पत्तिविधिनैव होमे विधेयत्वप्रतिपाद
नाद्गुणविधिना तत्र विधेयत्वबोधनस्य अनाकाङ्क्षितत्वा

सहकृतेनानेनाङ्गत्वंपरोद्देशप्रवृत्तिसाध्यत्वरूपं पारा-
र्थ्यापरपर्य्यायं ज्ञाप्यते ।

---

दित्यास्तां विस्तरः । ननु उत्पत्तिविधौ धात्वर्थस्य साध्य-
त्वेनैवान्वयाङ्गीकारे दध्ना इन्द्रियकामस्यजुहुयादित्यत्र
धात्वर्थहोमस्य दधिसाध्यत्वेन अन्वयादिन्द्रियं प्रतिविधे-
यत्वाबोधेन इन्द्रियस्य अफलत्वप्रसङ्ग इत्यत आह क्वचिदिति
यत्र गुणविधौ गुणस्य साक्षात्फलभावनायां करणत्वेना-
न्वयः नधात्वर्थीभूतहोमादौ तत्रेत्यर्थः तथाच दध्ना जुहो-
तीत्यत्र होमाश्रयदधिकरणत्वेन इन्द्रियम्भावयेदितिवाक्या-
र्थबोध इति तात्पर्य्यं एवञ्च यत्र गुणविधौ प्रमाणा-
न्तराप्राप्तफलश्रुतिरस्ति तत्र धात्वर्थस्य आश्रयत्वेनैवान्वयः
यत्र तु फलं प्रमाणान्तरलब्धं तत्र धात्वर्थस्य साध्यत्वेनै-
वान्वय इति विवेकः। अमुमेवार्थं दृष्टान्तोपन्यासेन व्यक्ती-
करोति यथेति। विनियोगविधेः सहकारिप्रमाणषट्कं
निरूपयितुमुपक्रमते एतस्येति एतस्य विनियोगविधेः
सहकारित्वञ्चात्र विनियोगविधिविधेयाङ्गभावज्ञापकत्वं
एतत्सहकृतेन श्रुत्याद्यन्यतमप्रमाणसहकृतेन अनेन विनि-
योगविधिना पारार्थ्यापरपर्य्यायं अङ्गत्वंज्ञाप्यतेइति
योजना तस्यचअङ्गत्वस्यलक्षणमाहपरोद्देशेति परपदेनात्र
उत्पत्तिविधिप्रयुक्तानुष्ठानंदर्शपूर्णमासादिरूपं प्रधानं कर्म्म
उच्यते तदुद्देशेन प्रवृत्तस्य पुरुषस्य कामनावतः प्रयाजा-

तत्र निरपेक्षोरवः श्रुतिः सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री च, तत्राद्या लिङाद्यात्मिका द्वितीया व्रीह्यादिश्रुतिः यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री साचत्रिविधा विभक्तिरूपा एकाभिधानरूपा एकपदरूपा चेति ।

---

दिषु अङ्गेषु भवति क्रतिसाध्यत्वं गुणविधिप्रयोज्यमिति तच्चभवतिलक्षणसमन्वयइति ध्येयम् ।

अस्यर्हितां श्रुतिमादौ लक्षयति तत्र निरपेक्ष इति तत्र तेषु षट्सु प्रमाणेषु मध्ये स्वजन्याङ्गभावविधेयकबोधे प्रमाणान्तरापेक्षाशून्यत्वमत्र निरपेक्षत्वं ज्ञेयम् य खलुशब्दः स्वजन्याङ्गभावविधेयकवुद्धौ प्रमाणान्तरनिरपेक्ष स श्रुतिरिति गीयते तान्त्रिकैः लक्षितां श्रुतिं विभजते साचेति तत्र विधात्रीं श्रुतिं लक्षयति तत्राद्येति आद्या विधात्री लिङाद्यात्मिका इति आदिपदेनतव्यलेङादयो ग्राह्याः । अभिधात्र्याः श्रुतेः स्वरूपमाह व्रीह्यादीति विनियोक्त्र्याःश्रुतेर्लक्षणमाह यस्येति तां विभजते सापीति विभक्तिश्रुतिं लक्षयति विभक्तीति अङ्गत्वं बोध्यते इति शेषः अङ्गत्वं चात्र कारकरूपत्वमेव ग्राह्यं नातो विभागसङ्करइति ध्येयम् । उदाहरणमाह यथेति । विधेयद्रव्यप्रकृतितया व्रीह्यादीनां अङ्गत्वे दृष्टान्तमाह यथेति अथ हृदयस्याग्रेऽवद्यति अथ वक्षसे इत्यादि श्रुते-र्हृदया-

तत्र विभक्तिश्रुत्या अङ्गत्वं यथा व्रीहिभिर्यजेतेत्यत्र तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वं तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूपहविःप्रकृतितया यागाङ्गत्वं। अरुणया एकहायन्यागवा सोमं क्रीणातीत्यत्र वाक्ये आरुण्यस्यापि तृतीयाश्रुत्याक्रियाङ्गत्वं तदपि गोरूपद्रव्यपरिच्छेदद्वारा नतु साक्षात् अमूर्त्तत्वात्।

---

दिकमेव पश्वङ्गं हविःस्वरूपतया अवगम्यते न खलु पशुत्वेन त्यागकर्मत्वं इत्यत्र पशुयागे हृदयादिरूपहविः प्रकृतितया यथापशोर्यागाङ्गत्वं शास्त्रसिद्धं तथा पुरोडाशप्रकृतितया व्रीह्यादीनामपि यागाङ्गत्वं निराबाधमिति तात्पर्य्यम्।

तृतीयाश्रुतेरुदाहरणान्तरमाह अरुणयेति अत्रेदं तत्त्वम् एवं किल ज्योतिष्टोमे पठ्यते अरुणयापिङ्गाक्ष्या एकहायन्यागवा सोमं क्रीणातीति अत्र च अरुणशब्दोगुणमरुणिमानमभिधत्ते नच गोसामान्याधिकरण्यादस्य द्रव्यबोधकत्वं तावतापि नाव्यहीतविशेषणाबुद्धिरिति न्यायादस्य गुणबोधकत्वात् अन्वय व्यतिरेकाभ्यां गुणमात्रे तत्पदशक्तिनिश्चयाच्च तस्य च आरुण्यस्य तृतीयया सोमक्रयसाधनत्वं गम्यते तच्च नोपपद्यते तस्य अमूर्त्ततया वासो हिरण्यादिवत् सोमक्रयसाधनत्वासम्भवात् ततश्च तृतीया-

व्रीहीन् प्रोक्षतीति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीय
श्रुत्या तच्च प्रोक्षणं न व्रीहिस्वरूपार्थं तस्य ते
विनाप्युपपत्तेः किन्त्वपूर्व्वसाधनत्वप्रयुक्तं व्रीहीन
प्रोक्ष्य यागानुष्ठानेऽपूर्व्वानुपपत्तेः एवं सर्व्वेष्वङ्गे
त्वपूर्व्वप्रयुक्तमङ्गत्वं वोध्यम्। एवमिमामगृभ्णन् र
नामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र द्वितीयाश्रु
मन्त्रस्य अश्वाभिधान्यङ्गत्वम्। यदाहवनीये जु
नीत्याहवनीयस्य होमाङ्गत्व सप्तमीश्रुत्या।

---

श्रुतेर्विनियोजकत्वासिद्धौ प्रकरणस्यैवात्र विनियोजक
कल्पनीयं प्रकरणन्तु ग्रहचमसाद्यखिलज्योतिष्टोमसाध
नेषु आरुण्यं निवेशयति तथाचैवं वाक्यार्थः सम्पद्यते य
यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्व्वाणि अरुणानि
कर्त्तव्यानि तस्मात् सङ्कीर्णोऽयं गुण इति प्राप्ते सिद्धान्त
यद्यप्यमूर्त्तो गुणस्तथापि हायनवद्विवच्च गोरूपं द्रव्य
व्यवच्छिनत्ति तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रियै
सह अन्वयो नानुपपन्नः एवं हि वाक्यभेदोऽपि न स्यात्
ननु माभवतु वाक्यभेदः लक्षणा तु गुणवाचकस्य शब्दस्य
गुणिनि दुर्व्वारैव इति चेन्न गुणस्यैवात्र तृतीयाश्रुत्या साध
नत्वं वोध्यते तच्च द्रव्यद्वारमन्तरेणानुपपद्यमानं अर्था
पत्त्या अवच्छेदकत्वं कल्पयतीति न किञ्चिदनुपपन्नमित्य
मुमर्थं मनसि निधायाह आरुण्यस्यापीत्यादि।

T

एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः। पशुना यजेतेत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्याकारकाङ्गत्वम्। यजेतेत्याख्याताभिहितसङ्ख्याया आर्थभावनांगत्वम् समानाभिधानश्रुतेः, एकपदश्रुत्या

---

द्वितीयया श्रुत्या विनियोगोदाहरणमाह व्रीहीनिति तत्र प्रोक्षणस्य व्रीह्यङ्गत्वञ्च अस्य च अपूर्व्वसाधनत्व प्रयुक्तमित्यग्रेण सहान्वयः। ननु प्रोक्षणं व्रीहिस्वरूपनिर्व्वाहकं कुतो न स्यादित्यत आह प्रोक्षणं विनेति तत्र हेतुमाह तस्य तेनेति। अपूर्व्वसाधनत्वप्रयुक्तौ प्रमाणमाह व्रीहीन् प्रोक्ष्येति व्रीहि-प्रोक्षणवत् अङ्गान्तरेष्वपि-विनियोगविधिलब्धशेषभावस्य अपूर्व्वमेव प्रयोजकमित्याह एवमिति। ऋतस्येति सत्यफलस्य इत्यर्थः तथाच सत्यफलाय रशनामिमां गृहीतवन्त इति मन्त्रार्थः अश्वाभिधान्यङ्गत्वं इमामित्यादिमन्त्रस्य अश्वरशनाग्रहणाङ्गत्वं अश्वाभिधानीमिति द्वितीयाश्रुत्या प्रतिपाद्यत इति यावत् सप्तम्याश्रुत्या विनियोगमुदाहरति यदाहवनीय इति विभक्तिश्रुतीनां सर्व्वासामेव स्व प्रकृत्यर्थ निष्ठ तत्तत्साधनभावविशेषविनियोक्तृत्वमित्याह एवमिति।

समानाभिधानश्रुतेरुदाहरणमाह पशुना यजेतेति। समानाभिधानश्रुतिः नानाप्रकृतावच्छेदकाच्छिन्नवाचकतावच्छेदकैक-धर्म्मावच्छिन्न-शब्दरूपा श्रुतिरिति-निष्कर्षः

च यागाङ्गत्वम्। नचामूर्त्तायास्तस्याः कथं भावना ङ्गत्वम् इति वाच्यं कर्त्तृपरिच्छेदद्वारा तदुपपत्तेः

---

एकपदश्रुतिस्तु नानाभिधेयनिरूपित विभिन्नशक्तिमत्प्रकृति प्रत्ययघटितमेकपदं तदेव च श्रुतिपदेन वोध्यते। एका भिधानश्रुतिवलेन च स्वोपस्थाप्यविधेयीभूतनानाविधार्थाः एकस्मिन् एव कारके अन्वीयन्ते एकपदश्रुत्या तु पद घटकीभूतप्रत्ययार्थाःएकस्मिन्धर्म्मिणिएवअन्वयं लभन्ते इति विवेकः तथाचात्र पशुनेति तृतीययोपस्थाप्ययो रेकत्वपुंस्त्वयोरेकपदश्रुत्या च पशुरूपैकद्रव्याङ्गत्वं प्रती यते -एकाभिधानश्रुत्या च तयोरेव कारकाङ्गत्वं निश्ची यत इति तात्पर्य्यम्। तथाच पशुना यजेतेत्यत्र एकपद श्रुत्या एकत्वपुंस्त्वयोः पशुरूपद्रव्यं प्रतिगुणभावो वोध्यते एकाभिधानश्रुत्या च तयोरेव कारकाङ्गत्वं वोध्यते इति एकमेव पशुना यजेतेति वाक्यं एकाभिधानरूपाया एकपदरूपायाश्च विनियोक्त्र्याः श्रुतेरुदाहरणघटितमिति हृदयम्। अत्रायमाशयः विधेयगतस्यैव एकत्वस्य पुंस्त्वस्य च विवक्षा नोद्देश्यगतस्य पशुना यजेतेत्यत्र पशोर्विधेयत्वेन एकपदश्रुत्या तद्गतमेकत्वमपि गुणतयाविधीयते उद्देश्य गतस्यविशेषणस्यएकाभिधानश्रुत्याप्रतिपादितस्यापि विधे यत्वं न सम्भवति अतएव ग्रहं संमार्ष्टि इत्यत्र उद्देश्यी भूतस्य ग्रहस्य विशेषणतया श्रुतमपि एकत्वं न विधेयं

कर्त्ता च आक्षेपलभ्य आख्यातेन हि भावना उच्यते सा च कर्त्तारं विना अनुपपन्नेति।

---

इत्यस्य एकाभिधानश्रुतिरसतिबाधके अङ्गभावापरपर्यायं शेषत्वं विधत्ते सति बाधके तु सा अनुवादात्मिकैव भवति न तत्र तदानीं श्रुतिता अङ्गीक्रियत इति।

ननु यदुक्तं यजेतेत्यत्र संख्यायाः समानाभिधानश्रुतेरार्थभावनाङ्गत्वंतन्नसङ्गच्छते संख्याया अमूर्त्तत्वेन आर्थभावनाङ्गत्वस्य यागाङ्गत्वस्य वा तत्राहत्तेः द्रव्यं हि दध्यादि यागाङ्गतया विज्ञायते न गुणः तस्य क्वचिदपि यागे अङ्गताया अदृष्टत्वादित्याशङ्क्य परिहरति नचेति गुणस्य भावनां प्रति यागं प्रति वा आङ्गत्वमुपपादयति कर्त्तृपरिच्छेदेति कर्त्तुरार्थभावनारूपव्यापारवतः परिच्छेदद्वारा स्वसजातीयनानात्ववत्कर्त्तृव्यावर्त्तनद्वारा तदुपपत्तेः तस्य भावनाङ्गत्वस्य यागाङ्गत्वस्य वा उपपत्तेरबाधितत्वादित्यर्थः। तथाच एकेनैव कर्त्ता साधितो दर्शपूर्णमासादिरेकोयागः फलापूर्व्वं जनयति न बहुभिर्द्वाभ्यां वा अनुष्ठितएकः तादृशयागः फलायकल्पतेइति राद्धान्तः ननु एकत्वस्य द्रव्यमात्रवृत्तितया द्रव्यत्ववद्द्रव्यान्तराव्यावर्त्तकत्वेन बहूनामपिकर्त्तॄणां प्रत्येकं एकत्वस्याश्रयत्वात् तैः कर्त्तृतया सम्पादितेन एकेन दर्शपूर्णमासादियागेन कुतो न प्रत्येकस्य फलापूर्व्वसिद्धिः

इतिचेदत्र नव्याः विशेषणान्तरानवच्छिन्नस्य एकत्वस्य यावद्द्रव्य वृत्तितया अर्थतएव तल्लाभस्य सिद्धेर्नतस्य प्रकृतेविवक्षा निष्प्रयोजनकत्वात् यच्च एकत्वस्य विधेयत्वं तत्र एकत्वपदेन स्वसजातीयद्वितीयरहितत्वरूपमेकत्व-मेव एकवचनादेरर्थः साजात्यञ्च स्वसमभिव्याहृतपदार्थ-प्रकृतसंसर्गित्व-विशिष्टस्वप्रकृत्यर्थ-तावच्छेदक-वत्त्वरूपं ता-दृशसजातीयद्वितीयरहितत्वञ्च तादृशसजातीयनिष्ठ भे-प्रतियोगितानवच्छेदकैकत्ववत्वमेव अत्र च स्वप[दे]-एकत्ववाचिका विभक्तिर्ग्राह्या पशुना यजेतेत्यत्र नानापशु-करणकयागपक्षे करणीभूतानां पशूनां प्रत्येकनिष्ठमेकत्वं स्वजातीय द्वितीयरहितत्व रूपं न भवति तत्र स्वपदेन पशुपदोत्तरतृतीयाग्रहणे तत्समभिव्याहृतयागरूपपदा-र्थसंसर्गित्वविशिष्टतत्प्रकृत्यर्थतावच्छेदकपशुत्वस्य बहुपशु-वृत्तितया तत्प्रत्येकनिष्ठस्य भेदस्य प्रतियोगितावच्छेद-कत्वस्य प्रत्येकपशुनिष्ठैकत्वे विद्यमानत्वात् एकपशुकयाग-स्थले तु स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टस्वप्रकृत्य-र्थतावच्छेदकवत्त्वं तु एकपशुनिष्ठमेव तन्निष्ठभेदप्रतियोगि-तानवच्छेदकत्वस्य तद्गतएकत्वएव विद्यमानत्वात् भवति च स्वजातीय द्वितीयरहितत्वरूपस्य एकत्वस्य तत्र लाभ इति भवति एकपशुकयागादिविधिविषयीभूतादृष्टसिद्धिः अन-याचरीत्या स्वर्गकामो यजेतेत्यत्र स्वर्गकामपदोत्तरवर्त्ति-प्रथमैकवचनस्य अर्थं परिष्कृत्य तस्य अधिकार्य्येकत्वं प्रति-

T

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबला।

---

पादनीयम् वस्तुतस्तु यजेतेत्यत्र आक्षेपलभ्यकर्त्तरि एता-
दृशैकत्वस्यान्वयानुबोधेन अध्याहृत स्वर्गकामपदोत्तरवर्त्तिन्या
एकत्वप्रकृतसुविभक्तेरेव तथाविधोऽर्थः कल्पनीयः मूले यत्
यजेतेति आख्यातार्थसंख्यायाः कर्त्तरि आक्षेपलभ्ये अन्वयः
प्रदर्शितः तत्प्रदर्शनमात्रं तत्रापि अध्याहृतं स्वर्गकाम
इति पदम् एव एकपदश्रुतेरुदाहरणं भविष्यतीति न
काचिदनुपपत्तिरितिसुधीभिःस्वयमभ्यूहनीयम्। प्रकृत-
मधुना अनुसरामः। आक्षेपलभ्यइति आक्षेपपदेनात्र
कर्त्तृवाचकपदमन्तरेण भावनावाचकमाख्यातं स्वजन्यान्वय
बोधेऽसमर्थमिति अनुपपत्तिलभ्यकर्त्तृवाचकस्वर्गकामा-
दिपदाध्याहारः प्रकृतोपयोगित्वात् ग्राह्यइतिध्येयं।
तदिह प्रवेशार्थिनां सौकर्य्याय श्रुत्यादीनां षट्प्रमाणानां
विनियोगपराणामुदाहरणानि संक्षिप्य प्रदर्श्यन्ते तत्र
संक्षेपतोलक्षणसंग्राहकं श्लोकमाहभाष्यकारः यथा श्रुति-
र्द्वितीयाक्षमताचलिङ्गं वाक्यं पदान्येव च संहतानि।
साप्रक्रिया या कथमित्यपेक्षा स्थानं क्रमोयोगबलं
समाख्या। इति अस्यार्थः कारकविभक्तिरूपा द्वितीया
श्रुतिः एतया किल क्रियाजन्यफलशालित्वरूपं कर्म्मत्वं
पदान्तरापेक्षां विनैव प्रतिपाद्यते मासमधीत इत्यादा-
वुपपदविभक्तीनां अन्तर्भावितपदसापेक्षत्वादिलक्षणेनार्थ-

बोधकत्वान्न बलवत्त्वमतस्तद्वारणाय कारकविभक्तिरूपेति द्वितीयापदमत्र कारकविभक्तिमात्रोपलक्षणं सर्व्वासामेव कारकविभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधनेऽन्यानपेक्षित्वस्य तुल्यत्वात् यथा व्रीहीन् अवहन्तीत्यत्र द्वितीयाश्रुत्या व्रीहीणामवघातक्रियाजन्यवैतुष्यरूपफलशालित्वं प्रतिपाद्यते । लिङ्गमाह क्षमतेति क्षमता नाम अर्थसामर्थ्यं योग्यतेति यावत् यथा बर्हिर्देवसदनं दामीतिमन्त्रस्य विनियोगविशेषाप्राप्तावपि दाप्लवणे इतिधातोर्दामीत्यस्य सिद्धत्वात् बर्हिश्छेदनप्रकाशकत्वेनार्थसामर्थ्यात् तत्रैव विनियोगोऽवगम्यते । परस्परान्वितक्रियाकारकार्थानि पदानि वाक्यम् यथा वायव्यां श्वेतं छागलमालभेत अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीत्यादौ वाक्यबलेन श्वेतच्छागलालम्भस्य आरुण्यादिगुणविशिष्टगवादेश्च यागे विनियोगोऽवगम्यते । प्रक्रिया प्रकरणं कथमित्यपेक्षा उत्पत्तिविधिना प्रधानकर्म्मबोधानन्तरं अङ्गाभिधानप्रयोजिका केन कथं वा इदं कर्त्तव्यमित्याद्याकाङ्क्षा यथा इडो यजति समिधो यजति इत्याद्युक्तानामाहुतिमन्त्रकाणां दर्शपौर्णमासप्रकरणपठितानां प्रकरणबलाद्दर्शपौर्णमासाङ्गत्वप्रतीतिः । स्थानं समानदेशत्वं सान्निध्यमिति फलितार्थः तदेव च क्रमपदेन उच्यते यथा दृषदि तण्डुलानावपति धान्यमसीत्यादौ सान्निध्यबलात् तण्डुलावपनादौ धान्यमसीत्यादिमन्त्राणां विनियोगः प्रतीयते ।

लिङ्गादिषु न प्रत्यक्षेण विनियोजकः शब्दोऽस्ति किन्तु कल्प्यो यावच्च तैर्विनियोगः कल्प्यते तावत् प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पक-

---

समाख्यायोगबलं यथा-हौत्रमाचरति औद्गात्रमाचरती-त्यादौ होतुरिदं हौत्रं होम उद्गातुरिदमौद्गात्रं गानं इत्यादेर्योगबलादवगतिरिति प्रमाणान्तरनैरपेक्षेण विनि-योजिकायाः श्रुतेः साक्षात्परंपरया वा कल्प्यमानश्रुति-द्वारा विनियोजकेभ्यो लिङ्गादिपञ्चप्रमाणेभ्यो बलवत्त्वं दर्शयितुमाह सेयमिति । लिङ्गादिभ्यः श्रुतेर्बलवत्त्वे साधक-मुपन्यस्यति लिङ्गेति श्रुतिमन्तरेण अन्यस्य विधायकत्वा-योगात् लिङ्गादिभिरपि श्रुतिः कल्पनीया तयाच कल्पि-तया साक्षात् अङ्गभावबोधनरूपं विनियोजनं क्रियते इति हि मीमांसकसिद्धान्तः एवं च सति यत्र साक्षाद्विनियोजकी-श्रुतिर्नास्ति तत्रैव विनियोगसिद्धये लिङ्गाद्यन्यतमप्रमाणेन विनियोजिकायाः श्रुतेः कल्पनं प्रत्यक्षश्रुत्या तु लब्धे विनि-योगे व्यर्थं लिङ्गादिना श्रुतिकल्पनं इत्यञ्च यत्र प्रत्यक्षया श्रुत्या एकस्य अङ्गभावो ज्ञाप्यते तद्विरुद्धस्य लिङ्गादिना अथच प्रधानीभूतस्य यागस्य एकं एव तादृशमङ्गं प्रति आकाङ्क्षा तत्र कस्याङ्गत्वमितिसंशये प्रत्यक्षश्रुत्यावो-धितमङ्गमादाय एव प्रधानस्य तादृशाङ्गाकाङ्क्षा निवृ-त्तेति न लिङ्गादिकल्प्यश्रुतिबोध्याङ्गापेक्षाइतिसिद्धत्वेवस्तुते

शक्तेर्व्याहतत्वात्। अतएव ऐन्द्र्या लिङ्गान्नेन्द्रोपस्थापनार्थत्वं किन्तु ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्योपस्थापनार्थत्वम्।

---

लिङ्गाद्यपेक्षया बलवत्त्वमिति लिङ्गादिष्वित्यादिव्याहतत्वादित्यन्तग्रन्थस्य तात्पर्यमवसेयम्। सिद्धं च लिङ्गापेक्षया श्रुतेर्बलवत्त्वकैमुतिकन्यायेन लिङ्गादुर्बलानां वाक्यादीनां श्रुतितो दुर्बलत्वं सहजतएव संवेद्यमिति लिङ्गापेक्षया श्रुतेर्बलवत्त्वे उदाहरणं न्यस्यति अतएवेति ऐन्द्री "कदाचनस्तरीरसि नेन्द्र सश्च सिदाशुषे" इत्यादिका इन्द्रदेवताप्रकाशिका ऋक् तस्या इदं इति ऐन्द्रम् एतच्च लिङ्गविशेषणं तथाच इन्द्रदेवताकमन्त्रविशेषनिष्ठात् इन्द्ररूपार्थप्रकाशनसामर्थ्यात् नेन्द्र्या ऋचः ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादेः इन्द्रदेवतोपस्थापनार्थत्वं गार्हपत्यमितिद्वितीयाश्रुत्या गार्हपत्यस्यैव उपस्थापकत्वतया विनियोगादिति समुदायार्थः। अत्राय माशयः। ऐन्द्र्या गार्हपत्यमुपतिष्ठेत इति विनियोगविधिरत्र हि गार्हपत्यपदेन शक्त्या अग्निविशेषःप्रतीयते तद्गतञ्च उपस्थानात्मकक्रियाजन्यप्रसादरूपफलाश्रयत्वरूपं कर्मत्वम् गार्हपत्यमिति द्वितीयया साक्षाद्बोधितम् तथाच तस्यदेवतात्वं श्रौतं ऐन्द्र्या इत्यनेन इन्द्रप्रकाशकप्रागुक्तमन्त्रविशेषस्य

शब्दसामर्थ्यं लिङ्गं यच्चाहुः सामर्थ्यं सर्व्व-शब्दानां लिङ्गमित्यभिधीयते। सामर्थ्यं रूढ़िरेव तेनसमाख्यातोभेदःयौगिकशब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दस्य भिन्नत्वात्।

---

तदुपस्थापनं प्रति करणत्वं नियस्यते। एवञ्चातविरोधः नह्यन्यप्रकाशकमन्त्रेण अन्यस्योपस्थानं विहितं तथाच इन्द्रपदे गार्हपत्यपदे वा लक्षणावश्यकी लिङ्गस्य विनि-योजकत्वे इन्द्रपदेलक्षणास्यादितितत्रएवंसमाधानं गार्ह-पत्यस्य कर्म्मत्वेन तादृशश्रौतदेवतारूपतया न गार्हपत्यपदे लक्षणालिंगेन तु इन्द्रस्य देवतात्वं विकल्पेनबोध्यमिदमुप-स्थानमिन्द्रदेवताकं इन्द्रप्रकाशमन्त्रकरणकत्वादित्यनुमान-द्वारकत्वादतऐन्द्र्यां रूचिवर्त्तमानस्य इन्द्रपदस्यैव गार्ह-पत्ये लक्षणा दुर्व्बलत्वादिति।

श्रुतिं निरूप्य लिङ्गं लक्षयति शब्देति सामर्थ्यं हि शक्तिः तन्मात्रस्य लिङ्गरूपत्वे अङ्कुरादिजननशक्तौ वीजादि-निष्ठाया मतिव्याप्तिः स्यात् अत आह शब्दसामर्थ्यमिति इदमुपलक्षणं शब्दसामर्थ्यवत् शब्देनोपस्थापितस्य अर्थ-स्यापि सामर्थ्यं क्वचिल्लिङ्गरूपतां भजत इति तादृशार्थ-सामर्थ्यस्यापि लिङ्गत्वमङ्गीकरणीयमेव तद्यथा स्रुवे-णावद्यतीत्यत्र तृतीयाश्रुत्या सामान्यतः स्रुवस्य अवदान-करणत्वसिद्धौ स्रुवस्य लिङ्गात् सामर्थ्यरूपात् आज्यादि-

T

तेन वर्हिर्देवसदनं दामीतिमन्त्रस्य कुशलव
नाङ्गत्वं नतूलपलवनाङ्गत्वं तस्य वर्हिर्दामीति लि
ङ्गात् तल्लवनं प्रकाशयितुं समर्थात् एवमन्यचापि
लिङ्गादिनियोगोऽङ्गष्टव्यः ।

---

द्रवद्रव्यावदानविशेषं प्रत्येव करणत्वं नियम्यते स्रुवे
मांसादिद्रव्यावदानस्यकर्त्तुमशक्यत्वादितिध्येयं । शब्दसाम
र्थ्यस्य तु शक्तिरूपत्वे लिङ्गस्य समाख्यातोऽभेदप्रसङ्ग इत्य
आह सामर्थ्यं रूढ़िरेवेत्यादि तथाच समुदायशक्त्यात्मि
काया: रूढ़ेरवयवशक्तिरूपाया:समाख्याया भेदः सु
सिद्धएव इति भावः ननु समाख्यातो रूढ़ेरभेदाङ्गीका
काहानिरिति चेन्न तथा सति समाख्यातो लिङ्गस्य प्राव
ल्यानुपपत्त्या पारदौर्वल्यसूत्रस्य अप्रामाण्यं प्रसज्जेत इति
लिङ्गस्य विनियोजकत्वे उदाहरणमुपन्यस्यन्नाह तेनेति ।

वर्हिःशब्दस्य तावत् कुशादिरूपे शक्तिर्विद्यते सा
रूढ़िरतएव सामर्थ्यपदेन तस्याएव ग्रहणम् एवञ्च दाप
खण्डने इत्यस्मात् धातोर्दामीतिपदस्य निष्पन्नतया छेद
मीति तदर्थःप्रतीयते तत्रैवं छेदनकर्म्मणोऽपेक्षितः
वर्हिःपदेन तदुपस्थापितमिति वर्हिःपदस्य कुशादिरू
मुख्यार्थप्रकाशानुकूलशक्तिरूपात् लिङ्गात् मुख्यानामि
वर्हिषां छेदनकर्म्मत्वं प्रतीयते नतु समाख्यालभ्याना
उलपादीनां गौणवर्हिषां छेदनाङ्गत्वमिति तात्पर्यं तद

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् अतएव स्योनं ते सदनं कृणोमीति मन्त्रस्य पुरोडाशसदनकरणाङ्गत्वं सदनं कृणोमीति लिङ्गान्नतु वाक्यात्।

---

वनं कुशादिरूपमुख्यवर्हिश्छेदनमितिभावः एवमन्यत्रेति अग्नयेत्वाजुष्टं निर्वपामीत्यादिमन्त्रस्य निर्वापादिप्रकाशनसामर्थ्यरूपाल्लिङ्गात् निर्वापादौ विनियोग इति भावः इदमत्रावधेयं निरुक्तं लिङ्गं तावद्विविधं भवति सामान्यसम्बन्धबोधकप्रमाणसापेक्षं तन्निरपेक्षञ्च यद्विना यदनुपपन्नं तस्य तदङ्गत्वं तु सामान्यसम्बन्धबोधकप्रमाणान्तरनिरपेक्षेण लिङ्गेन बोध्यते यथा य उविद्वानेवं दर्शपूर्णमासावित्यादौ ज्ञानपर्य्यवसितताया विद्वत्ताया दर्शपूर्णमासानुष्ठानं प्रति अङ्गत्वं विद्वान् इति शब्दनिष्ठात् ज्ञानप्रकाशकत्वसामर्थ्यरूपाल्लिङ्गात् अवगम्यते न तत्र सामान्यसम्बन्धबोधकप्रमाणाणान्तरापेक्षा ज्ञानं विना अनुष्ठानासम्भवात् यद्विना तु यत् सम्भवति तस्यापि तदङ्गत्वं न प्रमाणान्तरनिरपेक्षाल्लिङ्गाद्भवितुमर्हति अपि तु तादृशप्रमाणान्तरसापेक्षादेव यथा अग्नये जुष्टं निर्व्वपामीत्यादौ निर्व्वापादिप्रकाशनसामर्थ्यरूपात् लिङ्गात् न मन्त्रस्यास्य तादृशप्रमाणान्तरनैरपेक्ष्येण तिर्व्वापाङ्गत्वं प्रतीयते विनापि मन्त्रं प्रकारान्तरेण स्मृत्वा निर्व्वापस्य शक्यनिर्व्वाहत्वात् अतोऽत्र लिङ्गम् दर्शपूर्णमासप्रकरणसापेक्षतया दर्शपूर्ण-

समभिव्याहारो वाक्यं समभिव्याहारस्य साध्यत्वादि-
वाचकद्वितीयाद्यभावेऽपि शेषशेषिवाचकपदयोः सहो-

सासाध्यप्रधानापूर्व्वनिर्व्वाहकनिर्व्वापविशेषं प्रति मन्त्र-
स्यास्य अङ्गत्वं प्रत्याययतीति प्रकरणसापेक्षं लिङ्गत्वमस्य
इति कृतमतिविस्तरेण प्रकृतमनुसरामः।

निरुक्तस्य लिङ्गस्य वाक्यात् प्राबल्यमाह तदिदमिति
स्योनन्ते इति "स्योनन्तेसदनंकृणोमि घृतस्य धारया
सुसेवंकल्पयामि तस्मिन् सीदामृतेप्रतितिष्ठव्रीहीणां मेध
सुमनस्यमान" इति सम्पूर्णो मन्त्रः। अस्यार्थः हे पुरो-
डाश! ते तव स्योनं समीचीनं सदनं आश्रयं कृणोमि
करोमि तच्च सदनं घृतस्य धारया सुसेवं सुखसेवना-
कल्पयामि हे व्रीहीणां मेध अरत्पक्वधान्यविशेषाणां सार-
भूत! सुमनस्यमानः समाहितचेताः सन् त्वं तस्मिन्
अमृते सुखकरेसदने तिष्ठ उपविश। अत्र च मन्त्रवर्णे प्र-
क्रान्तपरामर्शिना तत्रेति तच्छब्देन पूर्व्वपरार्द्धयोरेकवाक्यत्व-
सिद्धे सम्पूर्णमिदं एकं वाक्यमेकएव मन्त्र इति सिद्धम्
एवञ्च अयमेकएव मन्त्रः स्थानकरणस्य पुरोडाशस्थापन-
च अदृष्टविशेषजनकस्य करणमिति प्रतीयते तथाच एकवाक्य-
तायां लिङ्गद्वारा विनियोगश्रुतिरेवंकल्पनीया यथा स्योनं
सदनं कृणोमीतिमन्त्रेण पुरोडाशस्थानं पुरोडाशस्थापनञ्च
विधेयम् इति पुरोडाशस्थानकरणे पुरोडाशस्थापने च

चारणं। यथा यस्यपर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति अत्र पर्णता जुह्वोः समभिव्याहारा-द्धेव पर्णताया जुह्वङ्गत्वं।

---

मन्त्रस्य सम्पूर्णस्य द्विःप्रयोगोऽविधेय इति पूर्व्वपक्षः सिद्धान्तस्तु एवं सति पूर्व्वोत्तरार्द्धयोरन्वयेन एकं वाक्यं सम्पन्नं तदेतत् उत्तरार्द्धस्य सदनप्रकाशने सामर्थ्यमपरि-कल्प्य सम्पूर्णमिमं मन्त्रं सदने विनियोक्तुं नार्हति तथा तदेववाक्यं पूर्व्वार्द्धस्य स्थापनकरणे सामर्थ्यमकल्पयित्वा न पुरोडाशस्थापने सम्पूर्णं मन्त्रं विनियोक्तुमर्हति एवं पूर्व्वोत्तरार्द्धयोर्लिङ्गद्वयं कल्पयित्वा यावत् वाक्यमिदं विनियोक्तुं प्रभवेत् तावत् पूर्व्वार्द्धश्रवणमात्रेण वाक्य-भावकल्पनात् प्रागेवज्ञानगोचरीभावमाप्नुवत् लिङ्गं विनि-योजकं भविष्यति तथा च स्वकल्प्यलिङ्गव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्टं। लिङ्गद्वयन्तु तां प्रति सन्निकृष्टं एवञ्च लिङ्गेन वाक्यबाधात् मन्त्रस्यार्द्धद्वयं यथाक्रमं सदन-करणस्थापनयोर्व्यवस्थितमिति।

क्रमप्राप्तं वाक्यं तावल्लक्षयति समभिव्याहार इति समभिव्याहारपदार्थं व्याचष्टे समभिव्याहारश्चेति साध्य-त्वादीति क्रियाकारकवाचकपदनिचयात्मकत्वविरहेऽपी-त्यर्थः शेषशेषिवाचकपदयो रङ्गस्य च अङ्गिनश्च वाच-कयोः पदयोरित्यर्थः तथाच स्वधर्म्मिकवृत्तिज्ञानप्रयोज्य

नचानर्थक्यमन्यथापिजुह्वाःसिद्धत्वात् इति वा
जुहूशब्देन तत्साध्यापूर्व्वलक्षणात् तथाच वाक्या
पर्णतयावत्तहविर्धारणद्वारा जुह्वपूर्व्वं भावयेदि

---

शाब्दबोधप्रयोजकवृत्तिज्ञानविषयत्वसम्बन्धेन एकपद
विशिष्टापरपदात्मकवाक्यस्य ग्रहणे क्रियाकारकवाचकपद
स्येव अभेदादिना विशेष्यविशेषणवाचकपदयोरपि ग्रहे
भवति वाक्यत्वमितिभावः। अत्र च अङ्गपदेन विशे
गृह्यते अङ्गिपदेन च विशेष्यं गृह्यत इति ध्येयं। जु
हविर्धारणपात्रविशेषः हविर्धारणं काष्ठादिनिर्मित
ह्वापिभवितुमर्हति इतिजुह्वपर्णताविधानमनर्थकमि
शङ्क्य परिहरति नचेति अन्यथापि काष्ठादिना
तत्साध्यापूर्व्वेति पर्णतामन्तरेण जुह्वा हविर्धारणसम्भवे
अदृष्टसाधनीभूतं हविर्धारणं पर्णमयीं जुह्वमन्तरे
भवति इति हि शास्त्रविदांसिद्धान्त इति भाव
समभिव्याहारात्मकवाक्यस्य विनियोजकत्वे फलित
एवञ्चेति नच हविषि अवत्तेति विशेषणं किमर्थमि
शङ्कायामाह अवत्तेति। अवद्यत इत्तवत्तं अवत्तञ्च
हविश्चेति अवत्तं हवि स्तस्य यद्धारणं तद्द्वारा इति भा
तथाचात्र अवत्तहविषोऽनुपादाने स्रुक्स्रुवादिभिः आ
हविषोनुपादानं प्रसज्येत विकल्पो वा स्यात् नचेत
शास्त्रार्थत्वं मीमांसकसम्मतमिति भावः।

T

एवञ्च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यम-पूर्व्वम्भवति नान्यथेतिगम्यते इति न पर्णतायावैय-र्थ्यम् । अवत्तहविर्धारणद्वारेति अवश्यं वक्तव्यम् अन्यथा स्रुवादिष्वपि पर्णतापत्तेः । सेयं पर्णता अना-रभ्याधीतापि सर्व्वप्रकृतिष्वेवान्वेति न विकृतिषु तत्र चोदकेनापि तत्प्राप्तिसम्भवात् पौनरुक्त्यापत्तेः ।

---

ननु जुहूपर्णताया अनारभ्याधीतत्वेन अनारभ्य तु यद्विधीयते तत्सर्व्वत्रास्तिवाधके अन्वयं लभत इति सिद्धा-न्तात् प्रकृतिवत् सर्व्वेषु विकृतियागेषु जुहूपर्णताविधानं कुतो नाङ्गीक्रियत इत्याशङ्कायामाह सेयं पर्णतेति प्रकृ-तिष्वेवेति एव कारव्यावर्त्यं दर्शयति न विकृतिष्विति । चोदकेनेति प्रकृतिवद् विकृतिरित्यतिदेशेन इति यावत् तत्प्राप्तिसम्भवात् पर्णताप्राप्तिनिश्चयात । ननु केयं प्रकृतिर्यत्साधर्म्यं विकृतिष्वतिदिश्यते का वा विकृतिः यत्रातिदिश्यतेप्रकृतिधर्म्म इत्याकाङ्क्षायामाह यत्रेत्यादि-प्रकृतिरिति लक्ष्यनिर्देशः यत्रेत्यादिकन्तु लक्षणबोधकं वाक्यं स्वविषयकमहावाक्यतात्पर्य्यज्ञानाविषयशब्दाबोधित-स्वासाधारणाङ्गप्रकाशकशब्दघटितमहावाक्यबोध्यप्रधान—कर्म्मत्वमेव प्रकृतित्वमिह्याभिप्रेतं स्वबोधकवाक्यघटित-प्रकरणाघटकवाक्याबोधितस्वासाधारणयावदङ्गकविहित-कर्म्मत्वं वा तत् इति विकृतिलक्षणमाह यत्रेति स्वबोधक-

T

यत्र समग्राङ्गोपदेशः सा प्रकृतिः यथा दर्शपू
मासादिः तत्प्रकरणे सर्व्वाङ्गपाठात् यत्र न सर्व
ङ्गोपदेशः सा विकृतिः यथा सौर्य्यादिः। तत्र का
पयानामङ्गानामतिदेशेन प्राप्तत्वात्। अनारभ्यवि
सामान्यविधिः। तदिदं वाक्यं प्रकरणादिभ्यो व
वत् अतएव इन्द्राग्नी इदं हविरित्यादेः एकवाक्यत
दर्शाङ्गत्वं नतु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम्।

---

वाक्याघटितप्रकरणघटकवाक्यबोधितत्वासाधारणाङ्गका
हितकर्म्मत्वं विकृतित्वमितियावत् विकृतेरुदाहरण
यथेति तत्र लक्षणं सङ्गमयति तत्रेति एवं लक्षणप्रक
भूतकर्म्मस्वरूपबोधकविधेः लक्षणं नाम च अभिधत्ते अ
रभ्येति सामान्येति च।

तस्य च वाक्यस्य प्रकरणादिभ्यो बलवत्त्वमाह त
मिति अयमाशयः एवं हि सूक्तवाक्ये श्रूयते अ
षोमाविदंहविरजुषेतामवीवृधेतांमहोज्यायोक्रातां इन्द्र
इदं हवि रजुषेतां अवीवृधेतां महोज्यायोक्रातां
अत्र च श्रुतौ अग्नीषोमादिरूपं देवतावाचकं पदं यथा
देवतं विभज्य तत्तदनुष्ठानकाले प्रयोक्तव्यमिति कौ
तीयतृतीयाध्याये विचारितं तत्र च इदं हविरि
त्यवशिष्टं पदं प्राक् प्रदर्शिताग्नीषोमेन्द्राग्निपदघटितम
द्वयगतमपि यथाक्रमममावास्यायामग्नीषोमपदपरित्या

उभयाकाङ्क्षा प्रकरणं। यथा प्रयाजादिषु समिधोयजतीत्यादौ वाक्ये फलविशेषस्यानिर्द्देशात् समिद्यागेन भावयेदिति बोधानन्तरं किमित्युपकार्य्याकाङ्क्षा दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति बोधानन्तरं कथमित्युपकारकाकाङ्क्षा इत्थं चोभयथा प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं। तच्च प्रकरणं द्विविधं महाप्रकरणं अवान्तरप्रकरणञ्चेति।

---

पौर्णमास्याञ्च इन्द्राग्निपदपरित्यागेन पठनीयं तथाच सति तेषां मन्त्रभागानां सर्व्वशेषत्वानुमापको दर्शपूर्णमास प्रकरणे पाठोऽनुगृहीतो भवेदिति प्राप्तेऽभिधीयते अग्नीषोमेतिपदानन्तरश्रुतस्य तच्छेषस्य इदं हविरित्यादिरूपस्य इन्द्राग्निपदान्वयस्य अश्रुतत्वात् प्रकरणेन प्रथमं तावत्तदन्वयरूपं वाक्यं कल्पनीयं तेन च प्रकरणकल्पितेन वाक्येन इन्द्राग्निप्रकाशनसामर्थ्यरूपं लिङ्गमस्यकल्पितस्य वाक्यस्य कल्पनीयं तेन च कल्पितेन लिङ्गेन अनेन मन्त्रभागेन तत्तदग्निविषयकमनुष्ठानं कार्य्यमित्येवंप्रकारं श्रुतिरूपं विनियोजकं कल्पनीयं एवञ्च प्रकरणविनियोगयोर्मध्येत्रिभिर्व्यवधानं भवति अग्नीषोमपदान्वयरूपं तु श्रूयमाणं वाक्यं लिङ्गश्रुतिभ्यामेव व्यवहितं भवति न प्रकरणवत् त्रिभिर्व्यवधीयते अतो गौरवात् प्रकरणाद्-



T

मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणं ते च प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं। एतच्च प्रकृतावेव उभयाकाङ्क्षासम्भवात् नतु विकृतौ तत्र प्रकृतिवद् विकृतिः कर्त्तव्या इत्यतिदेशेन कथम्भावाकाङ्क्षाया उपशमेन अपूर्व्वाङ्गानामप्युभयाकाङ्क्ष

---

वलीयोभवद्वाक्यं अग्नीषोमोपस्थापने एव अग्नीषोमशेषस्य इदं हविरित्यादिमन्त्रस्य लिङ्गं कल्पयित्वा तद्द्वारेण विनियोजकं भवति इति न तत्तदंशस्य मन्त्रभा प्रकरणात् सर्व्वशेषताकल्पनीया इति सिद्धान्तसमभिप्रेत्याह अतएवेति ।

क्रमप्राप्तप्रकरणं लक्षयति उभयेति उभयं वाक्यस्य मिथो या आकाङ्क्षा सैव प्रकरणपदवाच्या तत्र मिथः साकाङ्क्षवाक्यद्वयं एव प्रकरणे पर्य्यवस्यति मिति उपलक्षणं तेन तथाविधवाक्यत्रयस्य तच्चतुष्टय वा प्रकरणत्वेऽपि न क्षतिः प्रकरणघटकीभूतस्य एकैक काव्य मिथआकाङ्क्षां प्रदर्शयन् लक्ष्ये लक्षणं सङ्गमयथेत्यादिना प्रकरणं विभजते तच्चेति ।

महाप्रकरणत्वं तु प्रधानविध्युत्थाप्याकाङ्क्षानिवर्त्तकं सति तादृशविध्युत्थाप्याकाङ्क्षानिवर्त्तकवाक्यसमुत्थाप्याकाङ्क्षाया अनिवर्त्तकं यद्वाक्यजातं प्रधानविधिविधि तत्त्वमिति फलितोऽर्थः । अवान्तरप्रकरणेऽतिव्याप्तिवा

विनियोगासम्भवात्। तस्मादपूर्व्वाङ्गानां स्थानादेव विकृत्यर्थत्वमिति। अङ्गभावना सम्बन्धिप्रकरणमवान्तरप्रकरणम्। तेन च अभिक्रमणादीनां प्रयाजाद्यङ्गत्वम्।

तच्च सन्दंशेनैव ज्ञायते तदभावे चाविशेषात् सर्व्वेषां फलभावनाग्रहणप्रसङ्गेन प्रधानाङ्गत्वापत्तेः। एकाङ्गानुवादेन विधीयमानयोरप्यङ्गयोरन्तरालविहितत्वं सन्दंशः। यथा अभिक्रमणे त एहि 'समा-

---

याय द्वितीयविशेषणदलं लौकिकवाक्येऽतिव्याप्तिवारणाय प्रथमविशेषणदलम्। एवं अवान्तरप्रकरणत्वञ्च प्रधानविध्युत्थाप्याकांक्षानिवर्त्तकत्वे सति तादृशविध्युत्थाप्याकांक्षानिवर्त्तकवाक्योत्थाप्याकांक्षानिवर्त्तकं यद्वाक्यजातं तत्त्वम्। इति निष्कर्षः। यद्यपि विकृतिवाक्योत्थाप्याकांक्षाया निवर्त्तकं प्रकृतिप्रकरणं तथापि विकृतिवाक्यमन्तर्भाव्य प्रकृतिप्रकरणीयवाक्यानां महाप्रकरणत्वं न सम्भवतीति सोपपत्तिकमाह एतच्चेत्यादिना। उक्तेऽर्थे उपपत्तिं स्फुटीकरोति तत्रेत्यादिना विनियोगासम्भवादित्यन्तेन। अपूर्व्वाङ्गानां प्रकृतिप्रकरणानन्तर्निविष्टानां स्थानादेव विकृत्या सह मिथः साकांक्षत्वादेव इति यावत्। अवान्तरप्रकरणं लक्षयति अस्य लक्षणस्य निष्कर्षः प्रागेव कृत इति विरम्यते।

नयत उपभृतस्तेजो वा" इत्यादिना प्रयाजानुवादे किञ्चिदङ्गं विधाय तदनन्तरमपि प्रयाजानुवादे प्रयाजाङ्गत्वं यस्यैवं विदुषः प्रयाजा इत्यन्ते प्रेभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामं जुहोत्यभिजित्यै इत्यनन्तरं योवै प्रयाजानां मिथुनं वेदेत्यादि किञ्चिदङ्गं विधाय विधीयते।

---

सन्दंशो लौहकीलकविद्धलौहशलाकात्मकयन्त्रविशेषः तन्न्यायेनेति भावः तदभावे सन्दंशाभावे अविशेषात् प्रकरणस्यवैलक्षण्याभावात् सर्व्वेषां अङ्गभावनाङ्गानां अभिक्रमणादीनां, फलभावनाङ्गानां प्रयाजादीनां फलभावनाग्रहणप्रसङ्गेन प्रधानविध्युत्थाप्याकांक्षासाध्यनिवर्त्तकत्वप्रसङ्गेन इत्यर्थः। सन्दंशन्यायस्य स्वरूपं सूचयति एकेति तस्य उदाहरणमाह यथेति। अभिक्रमणस्य एकस्य प्रयाजरूपस्य अङ्गस्य अनुवादेन विहितयोरङ्गयोः अन्तराले विहितत्वं दृश्यतएव तदेव स्फुटीकुर्व्वन्नाह तद्धीति उपभृत् आज्याधारविशेषः तस्मात् जुहूरूपपात्रविशेषे घृतं समानयत इति हि मन्त्रस्य वर्त्तुलार्थः। किञ्चिदङ्गमिति उपभृदाख्यात् पात्रविशेषात् प्रयाजार्थं आज्यानयनरूपमङ्गमिति भावः। तदनन्तरमिति तत्पदेनाच अभिक्रमणं गृह्यते तदनन्तरमित्यस्य उत्तरेण किञ्चिदङ्गं विधीयत इत्यनेन सम्बन्धः।

अतः प्रयाजाङ्गमध्येऽभिहितमभिक्रमणं तदङ्गं। प्रयाजैरपूर्व्वं कृत्वा यागोपकारं भावयेदिति ज्ञाते कथमेभिरपूर्व्वं कर्त्तव्यमिति कथम्भावाकाङ्क्षायाः सत्त्वात्। सा च सन्दंशपठितैरभिक्रमणादिभिः शाम्यति। नचाङ्गभावनायाः कथम्भावाकाङ्क्षाभावः भावनासामान्येन तत्रापि तत्सम्भवात्। तदिदं प्रकरणं क्रियायाः साक्षाद्विनियोजकम् द्रव्यगुणयोस्तु तद्द्वारा। तथाहि यजेत स्वर्गकाम इत्यत्र फलभावनायां कथम्भावाकाङ्क्षायां सन्निधिपठिता-श्रूयमाणफलकम् क्रियाजातं उपकार्य्याकाङ्क्षेति कर्त्तव्यतात्वेनान्वेति। क्रियाया एव लोके कथम्भावा-

---

अङ्गभावनायाः कथम्भावाकांक्षाभावमाशङ्क्य परिहरति नचेति। अङ्गभावना कथम्भावाकांक्षाशून्या अङ्गभावनात्वात् यन्नैवं तन्नैवमित्याशङ्कापक्षे अनुमानप्रकारः उक्तहेतोरसाधारणानैकान्तिकत्वात् भावनात्वरूपसाध्यवि-[रो]धिव्याप्यहेत्वन्तरसद्भावाच्च नोक्तानुमानप्रसरः इत्युत्तर-[ग्रन्थ]निर्गलितार्थ इति ध्येयम्। निरुक्तप्रकरणस्य साक्षात्-[पर]म्परयाच विनियोज्यस्वरूपप्रदर्शनाय आह तदिद-मिति। व्यवहितविनियोज्यं दर्शयति तद्द्वारा इति क्रिया-द्वारा इत्यर्थः। अत्र च द्रव्यस्य क्रियाद्वारैव प्रकरणविनि-योज्यत्वं गुणस्तु द्रव्यक्रियोभयद्वाराप्रकरणविनियोज्यत्वं

काङ्क्षायामन्वयदर्शनात् नहि हस्तकुठारेणच्छिन्द्या-
दित्यत्र कथम्भावाकाङ्क्षायामुच्चार्य्यमाणोऽपि हस्तो-
न्वेति किन्तूद्यम्य निपात्येति उद्यमन निपातने एव।
हस्तश्च तद्द्वारेवान्वेति इति सार्व्वजनीनमेतत्
इदञ्च स्थानादिभ्यो वलवत्। अतएव अक्षैर्दीव्यति
राजन्यमिति देवनादयोधर्म्मा अभिषेचनीय सन्निधौ

---

इति ध्येयम्। तदेवंप्रकरणविनियोगप्रकारंविशदीकृत्य
प्रदर्शयितुमुपक्रमते तथाहीत्यादिना। भिन्नप्रकरणप्रठित
क्रियायाः अन्यत्र क्रियायामन्वयापत्तिवारणाय सन्निधि
पठितमित्युक्तम्।

इति कर्त्तव्यताकांक्षायां क्रियाया एव साक्षादन्वये
लोकप्रसिद्धिं प्रमाणयति क्रियाया इति। तद्द्वारे
उद्यमननिपतनद्वारैव निरुक्तस्य प्रकरणस्य स्थानादि
वलवत्त्वं दर्शयितुमाह इदञ्चेति इदं निरुक्तं प्र[illegible]
अतएव सन्निधिरूपस्थानापेक्षयाप्रकरणस्यवलव[illegible]
अत्रेदं तत्त्वं राजसूयप्रकरणे पश्विष्टिसोमया[illegible]
समप्रधानभूताः क्रियाविशेषाः श्रूयन्ते तत्र च [illegible]
दभिषेचनीयसंज्ञकः सोमयागविशेषः पठ्यते तत्सन्निधौ
अक्षै र्दीव्यति राजन्यमित्यादिना प्राप्ता देवनादयो धर्म्मा
किमभिषेचनीयस्य अङ्गानि उत राजसूयस्य इति संश[य]
सन्निधिपाठात्ते अभिषेचनीयस्यैव अङ्गानि न राजसू[य]

पठिता अपि स्थानान्न तदङ्गम् किन्तु प्रकरणात् राजसूयाङ्गमिति । देशसामान्यं स्थानं । तद्द्विविधम् पाठसादेश्यमनुष्ठानसादेश्यमिति च । स्थानं क्रमस्येत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम् यथा सन्निधिपाठः यथासङ्ख्यपाठश्च । तत्रैन्द्राग्नमेकादशकपालं निर्व्वपेत् वैश्वानरं द्वादशकपालं निर्व्वपेत् इत्येवं क्रमविहितेषु इन्द्राग्नीरोचनादिव इत्यादीनां याज्यानुवाक्यमन्त्राणाम् यथासङ्ख्यं प्रथमस्य

---

स्येति पूर्व्वपक्षः सिद्धान्तस्तु स्थानापरनाम्नः सन्निधेः प्रकरणाद्दुर्व्वलतया तयोर्विरोधे बलवता प्रकरणेन देवनादयः राजसूयस्यैव अङ्गत्वेन विनियोज्यन्त इति । स्थानं लक्षयति देशसामान्यमिति स्थानं विभजते तद्द्विविधमिति पाठसादेश्यमपि विभजते पाठेति यथाक्रमं उभयोरुदाहरणमुपन्यस्यति तत्रेत्यादिना । प्रथमस्य प्रथममिति प्रथमस्य ऐन्द्राग्नमित्यैन्द्राग्नेष्टियागस्य प्रथमं इन्द्राग्नी-रोचनादिव इत्यादि याज्यानुवाक्यायुगलं द्वितीयस्य वैश्वानरमिति वैश्वानरेष्टियागस्य द्वितीयं वैश्वानरो जीवनमित्यादिद्वितीयमङ्गमित्यर्थः एतादृशविनियोगे युक्तिमाह प्रथमपठितमन्त्रस्येत्यादिना कैमर्थ्याकाङ्क्षायां किमर्थोऽयं मन्त्र इत्याकारकाकाङ्क्षायां । यथासङ्ख्य-

T

प्रथमं द्वितीयस्य द्वितीयमित्येवं रूपोविनियोगः यथा-सङ्ख्य पाठात्। प्रथमपठितमन्त्रस्य कैमर्थ्याकाङ्क्षायां प्रथमतोविहितं कर्म्मैव प्रथममुपतिष्ठते समानदेशत्वात्। एवं द्वितीयमन्त्रस्यापि। वैकृताङ्गानां प्राकृताङ्गानुवादेन विहितानां सन्दंशपठितानां विकृत्य-

---

पाठाद्विनियोगं प्रदर्श्य प्राकृताङ्गानुवादेन विहितानां सन्दंशपठितानां वैकृताङ्गानां सन्निधिपाठाद्विनियोग-प्रकारमुदाहरति वैकृताङ्गानामित्यादिना आमनहोमा-नामिति वैश्वदेवीं साङ्ग्रहणीं निर्व्वपेत् ग्रामकाम इति श्रुत्याविहितस्य काम्येष्टियागविशेषस्य सन्निधौ आमन-देवा इति तिस्र आहुतीर्जुहोतीति पठिता होमविशेषाः आमनहोमा इति कीर्त्यन्ते। नन्वामनहोमानां विश्वजि-न्न्यायेन स्वतन्त्रं स्वर्गाकिकमेव फलं कल्प्यतां किमर्थं विकृतिफलेन तेषां सम्बन्धो मीमांसकैः कल्प्यते इत्या-शङ्कायामाह स्वतन्त्रफलकत्वइत्यादि। फलवत् कर्म्मासन्निधौ पठितस्यैवाश्रुतफलकस्य कर्म्मणः विश्वजिन्न्यायेन फल-कल्पना इति हि मीमांसकसिद्धान्तः फलवत् कर्म्मसन्निधौ पठितानां तु कर्म्मणां अश्रुतफलानामपि न विश्वजिन्न्या-येन स्वर्गकल्पना तथा सति प्रयाजादीनामपि पृथक् स्वर्गादिफलकल्पनाप्रसज्जेत फलवत्सन्निधौ अफलानान्तु पाठः फलवत् कर्म्माङ्गभावायैव अन्यथा तेषां पाठो निर-

र्थत्वं सन्निधिपाठात् यथा आमनहोमानां। तेषां हि कैमर्थ्याकांक्षायां फलं विकृत्यपूर्व्वमेव भाव्यत्वेन सम्बध्यते उपस्थितत्वात्। स्वतन्त्रफलकत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेः। पशुधर्म्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेवाह्नि ते धर्म्माः पठ्यन्ते अतस्तेषां कैमर्थ्याकांक्षायां अनुष्ठेयत्वेनोपस्थितं पश्वपूर्व्वमेव भाव्यत्वेन सम्बध्यते। तच्च स्थानं समाख्यातः प्रबलं अतएव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं पाठसादेश्यात् नतु पौरोडाशिकमिति समाख्यया पुरोडाशपात्राङ्गम्। समाख्या यौगिकः शब्दः। साच द्विविधा वैदिकी लौकिकी च। तत्र होतुश्चमसभक्षणाङ्गत्वं

---

र्थकः स्यात् इति प्रतिपादयितुमाह विकृतिसन्निधीति। सन्निधिपाठसादेश्येन विनियोगं निरूप्य अनुष्ठानसादेश्येन विनियोगं निरूपयति पशुधर्म्माणामिति पशुधर्म्मा उपाकरणपर्य्यग्निकरणादयः तत्र प्रजापतेर्जायमाना इदं पशुमितिद्वाभ्यामृग्भ्यां पशोरुपस्पर्शनमुपाकरणं दर्भज्वालया अर्चिः प्रदक्षिणीकरणं पर्य्यग्निकरणं यूपे रज्वाबन्धनं यूपनियोजनमित्येवमादयोऽनुसन्धेयास्तावदाकरे। तेषां किलधर्म्माणां अनुष्ठानसमानदेशत्वात् अग्नीषोमीय पश्वङ्गत्वमेव नतु सवनीयादिपशुशेषत्वमिति वक्तुलार्थः। एवञ्च

होतृचमस इति वैदिक समाख्यया। आध्वर्य्यवस्तत्तत्
पदार्थाङ्गत्वं लौकिक्या आध्वर्य्यवमिति समाख्यया।
इति संक्षेपः। तदेवं निरूपितानि श्रुत्यादीनि
षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना
समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेत इत्येवं
रूपेण यानि नियोज्यन्ते तान्यङ्गानि द्विविधानि
सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धानि
जातिद्रव्यसङ्ख्यादीनि तानि च दृष्टार्थान्येव। क्रिया-
रूपाणि च द्विविधानि गुणकर्म्माणि प्रधानकर्म्माणि
चेति। एतान्येव सन्निपत्योपकारकाणि आरादुप-

---

चोदकप्राप्तै स्तद्धर्म्मैर्निराकांक्षत्वात् पशुयागे तद्धर्म्मिणां न
प्रकरणं विनियोजकं किन्तु स्थानमेव इत्यभिप्रेत्याह औपव
सथ्येऽह्नीत्यादि। स्थानं निरूप्य तस्य समाख्यातो बल-
वत्त्वमाह तच्चेति। अतएव स्थानस्य प्रकरणापेक्षया बल-
वत्त्वादेवशुन्धनमन्त्रः शुन्धध्वं दैव्याय कर्म्मणे इत्ययं मन्त्रः
सच पौरोडाशिकमिति याज्ञिकसमाख्याते काण्डे पठितः
एवञ्च पुरोडाशकाण्डोक्तानां उलूखलजुह्वादीनां समाख्या
बलेनैव शोधने अस्य मन्त्रस्य अङ्गत्वमिति पूर्व्वपक्षे न समा-
ख्यया मन्त्रस्यास्य पुरोडाशपात्रशोधनाङ्गत्वं पदार्थयो-
र्भिन्नदेशावस्थितत्वेन सम्बन्धस्या प्रत्यक्षत्वात् स्थानविनियोगे तु
पदार्थयोः सामान्यदेशत्वलक्षणः सम्बन्धः प्रत्यक्ष एव इति

कारकाणि चोच्यन्ते। कर्म्माङ्गद्रव्योद्देशेन विधीयमानं सन्निपत्योपकारकं यथा अवघातप्रोक्षणादि तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थञ्चेति तत्र दृष्टार्थं अवघातादि अदृष्टार्थं प्रोक्षणादि दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनव अदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। द्रव्याद्यनु-

---

स्थानादेव विनियोगः युज्यते। इत्यादिकमभिप्रेत्याह ननु पौरोडाशिकमित्यादि।

क्रमप्राप्तां समाख्यां लक्षयति समाख्येति लक्षितां तां विभजते सा चेति तत्र तयोः समाख्ययोर्मध्ये, विनियोगप्रकरणमुपसंहरति तदेवमित्यादिना। विनियोज्यस्य अङ्गस्य द्वैविध्यमाह द्विविधानीति केते विधे इत्यत आह सिद्धरूपाणि क्रियारूपाणीति च तत्र तयोः मध्ये सिद्धानामङ्गानां फलं दर्शयति दृष्टेति एव कारेण अदृष्टार्थौ व्यवच्छिद्यते क्रियारूपाण्यङ्गानि विभजते क्रियारूपाणि चेत्यादिना। एतेषां क्रियारूपाणामङ्गानां व्यपदेशान्तरमपि शिष्यव्युत्पत्तये प्रदर्शयति एतान्येवेति। सन्निपत्योपकारकस्य कर्म्मणः लक्षणं प्रदर्शयति कर्म्माङ्गेति लक्षितस्य तस्य उदाहरणमाह यथेति।
सन्निपत्योकारकं कर्म्म विभजते तच्चेति तत्र दृष्टार्थमुदाहरति तत्रेति। अदृष्टार्थमुदाहरति अदृष्टार्थमिति पशु-

द्विश्यकेवलं विधीयमानं कर्म्म आरादुपकारकं तच्च परमापूर्व्वोत्पत्तावेव उपयुज्यते। सन्निपत्योपकारकन्तु द्रव्यदेवता संस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते इदमेव चाश्रयिकर्म्मेत्युच्यते। तदेवं निरूपितः सन्निपतो विनियोगविधिः। प्रयोगप्राशुभाववोधको विधिः प्रयोगविधिः। सचाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव। सहि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावाद्विलम्बापरपर्य्यायं प्रयोगप्राशुभावं

---

पुरोडाशादेर्दृष्टादृष्टार्थत्वमुदाहरति दृष्टादृष्टेति तत्र दृष्टादृष्टार्थत्वमुपपादयति तद्धीति। आरादुपकारकस्य कर्म्मणो लक्षणमाह द्रव्येति तस्य उदाहरणमाह यथेति। आरादुपकाकारकात् कर्म्मणः सन्निपत्योपकारस्य कर्म्मणः स्फुटतरवैलक्षण्यज्ञापनाय अन्यथा तयोः स्वरूपं निर्व्वक्ति आरादित्यादिना सन्निपत्योपकारकस्य कर्म्मणः संज्ञान्तरं व्युत्पत्तिदार्व्याय प्रदर्शयति इदमिति द्रव्यदेवतारूपश्चाश्रयोऽस्यास्ति इति व्युत्पत्त्या आश्रयिपदेन सन्निपत्योपकारकं कर्म्मगृहीतं भवतीति अन्वर्थेयं संज्ञा। आश्रयिकर्म्मैव क्वचित् समवायिकर्म्मपदेन व्यपदिश्यते। विनियोगविधेः स्वरूपनिर्णयप्रकरणमुपसंहरति तदेवमिति इदानीमवसरप्राप्तं प्रयोगविधिं निरूपयिष्यन्नाह प्रयोगप्राशुभावेति। प्रयोगप्राशुभावः विलम्बाभावः अव्यवधानेन

नच तदविलम्बेऽपि प्रमाणाभाव इति वाच्यं विलम्बे त्वङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः विलम्बेन क्रियमाणयोः पदार्थयोः इदमनेन सहकृतमिति साहित्यव्यवहाराभावात् स च विलम्बो नियते क्रमे आश्रीयमाणे भवति अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यं एतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेय-

---

विधीयमानत्वं इति तु निष्कर्षः एतदेव भङ्ग्या प्रतिपादयन्नाह सचेति।

विलम्बे प्रमाणाभावश्चेदविलम्बस्य साधकस्तर्हि युक्तितौल्यादविलम्बे प्रमाणाभावः किमिति विलम्बं न साधयेदित्याशङ्क्य परिहरति नचेति अर्थापत्तिरेव फलतः अविलम्बस्य साधिकास्ति इति न विनिगमना विरह इत्याह विलम्बे त्विति अर्थान्तरेणाविलम्बं नाङ्गप्रधानयोः साहित्यानुपपत्तिः अविलम्बेन विनापि कर्म्मणां साहित्यव्यवहाराङ्गीकारे क्षतिविरहात् इत्याशङ्क्य निषेधति विलम्बेनेति तथाविधस्थले साहित्यव्यवहारस्य लोके अदृष्टचरत्वादेवतथाविधस्थले साहित्यव्यवहारो नाङ्गीकर्त्तुमुचितः न खलु पूर्व्वापरयोर्दिवसयोः क्रियमाणयोर्भोजनयोः पूर्व्वदिवसीयभोजनेन सहकृतं परदिवसीयभोजनमिति केचनव्यवहरन्तीति भावः। सचाय-



T

प्रयोगप्राशुभावसिद्ध्यर्थं नियतक्रममपि पदार्थविशे
षणतया विधत्ते। अतएवाङ्गानां क्रमबोधको विधि
प्रयोगविधिरित्यादिलक्षणम्। तत्र क्रमोनामवितति
विशेषः।

पौर्व्वापर्य्यरूपो वा। तत्रषट्प्रमाणानि श्रुत्य
पाठ स्थान मुख्य प्रवृत्त्याख्यानि। तत्र क्रम
परवचनं श्रुतिः तच्च द्विविधं केवलक्रमपरं तद्
विशिष्टपदार्थपरञ्च। तत्र वेदं कृत्वा वेदिं करोति
इति केवलक्रमपरं वेदिकरणादेर्वचनान्तराप्राप्तत्वा

---

मविलम्बः क्रमेऽनाश्रीयमाणेऽनुपपन्नः एवेतिदर्शयन्ना
सचेति प्रयोगविधेपापत्तेरिति तत्तत्कर्म्मणां नियत
पूर्व्वापरीभावनिश्चयमन्तरेण किमेतदग्रे करणीयं अन
इति संशयस्य अविनिवृत्तेः अङ्गकर्म्मणां स्वरूपानु
ष्ठानस्य अशक्यसम्पादतापत्तिरिति भावः। अतः उक्ता
देवकर्म्मविचेपभयादित्यर्थः। क्रमस्य लक्षणमाह क्रमो-
नामेति।

प्रयोगविधेः लक्षणान्तरमपि ग्रन्थान्तरपरिदृष्टमेतद
परमेव इत्याह अतएवेति तल्लक्षणघटकस्य क्रमपदस्य
अर्थमाह तत्रेति विततिर्वितानं ननु वितानशब्दस्य
योगलभ्यश्चेदर्थोऽभिमतस्तदा तस्य तनुविस्तारे इत्यस्मा
द्धातोर्निष्पन्नतया विस्तारार्थकत्वात् बहुभिः कर्त्तृभिर्युग

वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपरम्। एक-प्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातु-मशक्यत्वात्। सेयं श्रुतिरितरप्रमाणापेक्षया बल-वती तेषां वचनकल्पनाद्वारा क्रमप्रमाणत्वात्।

---

यत् कृतानां सर्व्वेषामङ्गानां वितानाश्रयत्वेन तथाविध-स्थाने प्रयोगविधेरतिप्रसङ्ग इति अतःपश्चान्तरमाह पौर्व्वापर्य्यरूपोवेति। पौर्व्वापर्य्यरूपस्य क्रमस्य घटकीभूतं भूतं यत् पूर्व्वत्वमुत्तरत्वञ्च तस्य व्यक्तिविशेषनिष्ठत्वनियामकाभावेन प्रयोगविध्यर्थानुष्ठानव्याकुलीभावप्रसक्तिवारणार्थं तन्नियामकप्रमाणप्रतिपादनाय आह तत्र षट्-प्रमाणानीति तत्र पौर्व्वापर्य्यरूपे क्रमे इत्यर्थः। कानिच तानीत्यपेक्षायामाह श्रुत्यर्थेति तत्राभ्यर्हितां श्रुतिं लक्षयति क्रमेति पदार्थद्वयनिष्ठपूर्व्वापरीभावबोधकवाक्यं श्रुतिरिति फलितार्थः अनयाश्रुत्याप्रतिपादितः क्रमः शाब्दः क्रम इति गीयते तन्त्रविद्भिः। तस्य क्रमपरवचनस्य द्वैविध्यमाह तच्चेति। केवलक्रमपरस्य वचनस्य उदाहरणमाह वेदं कृत्वेति वेदोनाम दर्भमुष्टिविशेषः वेदिस्तु आहवनीयगार्हपत्ययोर्मध्ये चतुरङ्गुलनिखातं हविर्निधानस्थानं अस्य केवलक्रमपरत्वे हेतुमाह वेदिकरणादेरिति दर्शपूर्णमासीयहविरधिवासनीत्तरं वेदिकरणवाक्येनैव वेदिकरणादेः प्राप्तत्वात् तदनुवादेन क्त्वाप्रत्ययेन

अतएवाश्विनग्रहणस्य पाठक्रमात् तृतीयस्थाने ग्रहणप्रसक्तौ आश्विनोदशमोगृह्यत इति वचनात् दशमस्थाने ग्रहणमित्युक्तम्। यत्र प्रयोजनवशात् क्रमनिर्णयः सोऽर्थक्रमः यथाग्निहोत्रं जुहोति यवागूं पचति इत्यग्निहोत्रयवागूपाकयोः अत्र हि यवाग्वाः होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्व्वमनुष्ठीयते। सचायं पाठक्रमाद्बलवान् यथापाठं ह्यनुष्ठाने क्रम प्रयोजनवाधेन दृष्टार्थत्वं स्यात् नहि होमानन्

---

यानन्तर्य्यमात्रमत्रविधीयत इत्यर्थः। क्रमविशिष्टपदार्थ परवचनमुदाहरति वषट्कर्त्तुरिति।

अस्य वाक्यस्य विशिष्टक्रमपरत्वे युक्तिमाह एवेति एकप्रसरताभङ्गभयेन एकवाक्यताभङ्गभयेन। अनन्तरोक्त क्रमपरेभ्यः प्रमाणेभ्यः निरुक्तायाः श्रुतेः प्राबल्यं प्रदर्श यितुमुपक्रमतेसैयमित्यादिना। बलवत्त्वे हेतुमाह तेषां वचनकल्पनाद्वारेति प्राबल्यस्योदाहरणमुपदर्शयति अत एवेति ज्योतिष्टोमे पठितेषु ऐन्द्रवायवादिग्रहेषु आश्विन नामको ग्रहस्तृतीयस्थाने पठितः ततश्च पाठक्रमेण आश्विन ग्रहस्य तृतीयस्थाने ग्रहणप्रसक्तावपि आश्विनो दशमो गृह्यते इति श्रुत्या तस्य दशमत्वं विधीयत इति पाठ क्रमेण प्राप्तं तृतीयत्वं वाधित्वा दशमत्वं एवं गृह्यते क्रम कल्पकपाठापेक्षया साक्षात्क्रमवोधकदशमत्वश्रुतेर्वलवत्त्वा

T

क्रियमाणस्य पाकस्य किञ्चिद्दृष्टं प्रयोजनमस्ति । पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः तस्माच्च पदार्थानां क्रम आश्रीयते येन हि क्रमेण वाक्यानि तेनैव क्रमेण अधीतानि अर्थप्रत्ययं जनयन्ति यथा-प्रत्ययञ्च पदार्थानां अनुष्ठानात् स च पाठो द्विविधो मन्त्रपाठो ब्राह्मणपाठश्चेति तत्राग्नेयाग्नीषोमयो-

---

रिति पर्य्यवसितार्थः । अवसरप्राप्तस्य अर्थक्रमस्य स्वरूप-प्रदर्शनायाह यत्रेति प्रयोजनवशेन प्रयोजनान्यथानुपपत्त्या । उदाहरणमाह यथेति अत्र च उदाहरणे पाठक्रमेण अग्नि-होत्रानन्तरं यवागूपाकप्रसक्तौ अपि यवाग्वाः पश्चात्-करणे तत्करणकस्य होमस्य बाधभयेन होमनिष्पत्तिरूप-प्रयोजनमपेक्ष्यैव पाठक्रमस्य बाधः इति आर्थक्रमस्य प्रामाण्यं सिध्यति इति सप्रपञ्चं प्रतिपादयितुमाह अयहीति । अस्य च पाठक्रमाद्बलवत्त्वमाह अयेति बलवत्त्वे युक्तिमाह यथापाठं ह्यनुष्ठानइति पाठक्रमस्य लक्षणमाह पदार्थबो-धकवाक्यानामिति । तस्मात् वाक्यानां क्रमात् ।

तेनैव क्रमेण अधीतानीति पूर्व्वापरीभूतानि वाक्यानि युगपद्एकस्य पाठकर्त्तुरुच्चारणकर्म्मतां न खलु लब्धुं ईशते इति तानि क्रमेण एव अधीयन्ते क्रमेण एव स्वप्रति-पाद्यार्थजातं प्रतिपादयन्ति तथाच असतिबाधके क्रमिक-स्मृतिविषयाणां अर्थानां स्मृतिक्रमेणैवानुष्ठानं न्याय्यमेव

स्तत्तद्वाक्यानां याज्यानुवाक्यानां पाठाद् यः क्रम आश्रीयते समन्त्रपाठात् सचायं मन्त्रपाठः ब्राह्मण पाठाद्बलीयान् अनुष्ठाने मन्त्रपाठस्य ब्राह्मणवाक्या- पेक्षया अन्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहि- रेव इदं कर्त्तव्यमित्यवबोध्यकृतार्थं मन्त्राः पुनः प्रयोग- काले व्यापियन्ते अनुष्ठानक्रमस्य स्मरणक्रमाधीन- त्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वात् अन्तरङ्गो मन्त्रपाठ इति। प्रयाजानां समिधो यजति तनून- पातं यजति इत्येवं विधिपाठाद्यः क्रमः सब्राह्मण-

---

भवति यथास्मरणमनुष्ठानस्य बाधकमन्तरेण सुतरामेव सर्व्वबुद्धिविषयभावात् इति निर्गलितार्थः । स च पाठः इति क्रमिकः पाठ इत्यर्थः । याज्यानुवाक्यानां अग्नि- मूर्द्धादिव इत्यादिवाक्यानामित्यर्थः । मन्त्रपाठस्य ब्राह्मण- पाठाद्बलवत्त्वे युक्तिमुपन्यस्यति अनुष्ठानइत्यादिना ब्राह्मण- वाक्यापेक्षया मन्त्रपाठस्य अनुष्ठानेऽन्तरङ्गत्वादितियोजना अन्तरङ्गत्वात् सन्निकृष्टतया झटिति, आकाङ्क्षानिवर्त्तक- त्वात् । ब्राह्मणवाक्यस्य क्रमविषये मन्त्रवाक्याद्दुर्व्वलत्वे हेतुमाह ब्राह्मणवाक्यं हीति मन्त्राणां बलवत्त्वे प्रागुक्त- मपि हेतुं परिष्कृत्य प्रदर्शयितुमाह मन्त्राः पुनरित्यादि । ब्राह्मणक्रमस्य लक्षणमाह प्रयाजानामित्यादिना । ब्राह्मण- पाठक्रमस्य अनुष्ठानक्रमं प्रति प्रयोजकत्वमधिक्षिपन्

T

क्रमः। यद्यपि ब्राह्मणवाक्यानि अर्थं विधाय कृतार्थानि तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याभावात् तान्येव क्रमस्मारकत्वेन स्वीक्रियन्ते। स्थानं नामोपस्थितिः। यस्य हि देशे योऽनुष्ठीयते तत् पूर्वतने पदार्थे कृते सएव पूर्वमुपस्थितो भवति इति युक्तं तस्य प्रथममनुष्ठानम्। अतएव साद्यस्क्राग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्त्तव्ये आदौ सवनीयपशोरनुष्ठानं इतरयोः पश्चात् तस्मिन् देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः। तथाहि ज्योतिष्टोमे त्रयः पशुयागा अग्नीषोमीयः[1] सवनीय आनुबन्ध्य-

---

पूर्वपक्षमवतारयति यद्यपीति एकस्य उभयपरत्वाङ्गीकारे क्षतिविरहात् अनुष्ठानक्रमपरत्वकल्पनायां वाधकानवतारात्त्व इति परिहरति तथापीति क्रमप्राप्तं क्रमपरं स्थानं लक्षयति स्थानं नामेति प्रकृतौ नानादेशत्वेन पठितानां पदार्थानां प्रकृतिवद्विकृतिरितिचोदकेन विकृतौ अनुष्ठाने प्राप्ते यस्य खलु देशे तेषामनुष्ठानं तस्य प्रथममनुष्ठानं इतरयोरनन्तरमित्ययं यः क्रमः सस्थानक्रम इति वर्त्तलार्थः अमुमेवार्थं दृष्टान्तोपन्यासपूर्वकं विशदीकर्त्तुमाह यस्य हि देशे इत्यादि दृष्टान्तमुत्थापयति अतएवेति उदाहरणं इदं तथाहीत्यादिग्रन्थेण स्वयमेव विशदी

श्वेति । तेच भिन्नदेशा अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यस्को-नाम सोमयागविशेषः सचाव्यक्तत्वात् ज्योतिष्टोम-विकारः अतस्त्रयोऽपि पशुयागाः साद्यस्के चोदक-प्राप्ताः । तेषां तत्र साहित्यं श्रुतम् सह पशू-नालभेत इति तच्च साहित्यम् सवनीयदेशे तस्य

---

करिष्यते इति नात्र विस्तारः सप्रयोजनक इत्युपेक्षितः । उक्तमप्यर्थं विशदीकृत्य बोधयितुमाह तथाहीति । ज्योतिष्टोमे पशुप्रकृतिके यागविशेषे । इतरयोः अग्नी-षोमीयानुबन्ध्ययोरित्यर्थः । प्रागुक्तमुदाहरणं विशदी-कृत्य प्रदर्शयितुमाह तथाहीति । अव्यक्तत्वात्स्वोत्थाप्या-काङ्क्षानिवर्त्तकदेवतास्वरूप-प्रतिपादकवाक्यान्तरा-समभि-व्याहृतत्वादित्यर्थः । तदुक्तमभियुक्तैरव्यक्तत्वञ्च स्वार्थ-चोदितदेवताराहित्यमिति । तस्य सवनीयस्य प्रधान-प्रत्यासत्तिरिति प्रकृतिभूते ज्योतिष्टोमे सवनीयः सुत्या-कालिक इति यथाप्रधानप्रत्यासन्नस्तथा विकृतौ साद्यस्के-ऽपि प्रकृतिवद्विकृतिरितिन्यायेन सुत्याकालिकएवेति सवनीयः प्रधानसन्निकृष्ट इति प्रकृते तात्पर्य्यमवसेयम् । त्रयः पशुयागाः अग्नीषोमीयसवनीयानुबन्ध्याख्याः चो-दकप्राप्ताः प्रकृतिवद्विकृतिरिति न्यायावगता इत्यर्थः न्यायप्राप्तत्वेऽपि प्रकृतितो यो विशेषस्तमाह तेषां इति

प्रधानप्रत्यासत्तेः स्थानातिक्रमणसाम्याच्च सवनीयदेशे त्वनुष्ठानेऽग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रमोभवति। स्वस्वस्थानातिक्रममात्रं भवति प्रधानप्रत्यासत्तिलाभस्य अग्नीषोमीयदेशेत्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रं आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमस्य स्यात्। एवमानुबन्ध्यदेशे अग्नीषोमीयस्य द्रष्टव्यः स्थानातिक्रमः तथा सवनदेशे सर्व्वेषामनुष्ठाने कर्त्तव्ये सवनीय

---

तेषां प्रागुक्तयागत्रयाणां तत्र साद्यस्के साहित्यं सहानुष्ठानं एकदिननिर्व्वर्त्यत्वमिति तु निष्कर्षः। साहित्ये प्रमाणमाह सहपशूनालभत इति तच्च साहित्यं विकृतौ असाधारणं कस्मिन् खलु स्थाने अनुष्ठातव्यं इति अशङ्कायामाह तच्चेति सवनीयदेशे त्रयाणामनुष्ठाने हेतुमाह तस्येति प्रधानप्रत्यासत्तिरिति प्रकृतिभूते ज्योतिष्टोमे सुत्याकालिकत्वेन सवनीयस्य विधानात् यथा प्रधानप्रत्यासत्तिः चोदकेन विकृतावपि सवनीयस्य सुत्याकालिकत्वं लब्धमिति सवनीयस्यैव प्रधानप्रत्यासत्तेरित्यर्थः।

स्थानातिक्रमणसाम्याच्चेति अग्नीषोमीयानुबन्ध्ययोः सवनीयदेशेऽनुष्ठाने कर्त्तव्ये स्थानातिक्रमण द्वारा साम्यादिति भावः। एतदेव विवृणोति सवनीयदेश इति सवनीयदेशे क्रियमाणतायां सम्भवतीति प्रदर्शनाय आह प्रधा-

आश्विनग्रहणानन्तरं हि स यस्य प्रथममनुष्ठानं सवनीयदेशे अग्नीषोमीयदेशेऽनुबन्ध्यदेशे वानुष्ठाने त्रयाणामपि मध्ये द्वयोर्द्वयोः स्वस्व स्थानातिक्रमः तथाच प्रकृतावाश्विनग्रहणं कृत्वा त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोतीत्याश्विनग्रहणानन्तरं सवनीयोविहित इति साद्यस्केऽपि आश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्यस्थानात् प्रथममनुष्ठानं इतरयोस्तु पश्चात् इत्युक्तम्।

---

नेति अग्नीषोमानुबन्ध्ययोरन्यतरस्य देशे त्रयाणां अनुष्ठाने यथा सर्व्वेषां स्थानातिक्रमः प्रधानप्रत्यासत्त्यलाभश्चेति हानिर्वर्त्तते नैवं सवनीयदेशे त्रयाणामनुष्ठाने सम्भवतीति दर्शयितुमाह तथा सवनदेशे इति हि यस्मात् आश्विनग्रहानन्तरं प्रकृतौ आश्विनग्रहणानन्तरं स यतो विहितः अतो विकृतावपि साद्यस्के आश्विनग्रहणानन्तरं सुत्याकालएव सन्निपतति इति भावः अतोऽस्मिन् कल्पे सवनीयः सवनीयदेश एव न तस्य स्वस्थानातिक्रमो भवतीति महत् कल्पनालाघवं इति तात्पर्य्यं। अग्नीषोमीयानुबन्ध्ययोरेकतरस्यदेशे कर्त्तव्ये महत् कल्पना गौरवमिति दर्शयितुमाह अग्नीषोमीयदेशेऽनुबन्ध्यदेशे वेति। सवनीयस्य प्रथममनुष्ठाने प्रकृतिवद्विकृतिरिति

प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यः क्रमः येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्व्वेषामङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति । व्युत्क्रमेणानुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषाञ्चिदत्यन्तव्यवधानं स्यात् तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽपि अङ्ग-

---

न्याय एव प्राधान्येनानुकूल्यं भजत इत्याह तथाचेति इतरयोः अग्नीषोमीयानुबन्ध्ययोरित्यर्थः पश्चात् सवनीयानन्तरं उक्तं द्वादशलक्षण्यां पञ्चमाध्यायस्य प्रथमपाद इति शेषः ।

क्रमप्राप्तं मुख्यक्रमं लक्षयति प्रधानेत्यादिना तेनैव क्रमेणेत्यत्र यदेति पदं अध्याहृत्यव्याख्येयं अग्रे तदेत्यस्यानुरोधात् । यत्र तु अनेकेषां साङ्गानां प्रधानानां सह कर्त्तव्यतयोपदेशः तत्र प्रयोगविधिना साहित्यावगमेऽपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि अधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैव अङ्गानां क्रमोऽवसेयः अतएव तथाविधप्रवृत्तौ अङ्गनिरूपितप्रधानप्रत्यासत्त्यनुग्रहो निमित्ततां भजते मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रहो निमित्ततां भजत इति अभियुक्तानां तात्पर्य्यमवसेयं ।

क्रमे हेतुरतएव प्रयाजशेषेणादौ आग्नेयहविषो-ऽभिघारणं पश्चादैन्द्रस्य दध्नः आग्नेयैन्द्रयागयोः पौर्वापर्य्यात् एवञ्च द्वयोर्द्वयोरभिघारणयोः स्वस्व-प्रधानेन तुल्यमेकान्तरितं व्यवधानं व्युत्क्रमेणाघारे आग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानं ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरितं व्यवधानं तच्चा-

---

प्रधानक्रमव्यत्ययेनाङ्गानां अनुष्ठाने बाधकमवतारयति व्युत्क्रमेणेति इष्टापत्तौ तत्र बाधकमाह तच्चायुक्तमिति अयुक्तत्वे हेतुमाह प्रयोगेति केषाञ्चिदङ्गानां प्रधानैरत्यन्तं सन्निकर्षः केषाञ्चिच्च अत्यन्तं विप्रकर्षः इत्येवं रूपं अद्व-वैषम्यं प्रसज्जेत फलितमुपसंहरन्नाह अत इति अभिघारणं स्रवता आज्येन अभिषेचनम्। आग्नेयहविषः अग्नेययागा-ङ्गस्य ऐन्द्रस्येति इन्द्रदेवताकस्य आग्नेययागानन्तरमनुष्ठीय-मानस्य अङ्गभूतं यद्दधितदेव ऐन्द्रदधिपदेन प्रत्याय्यत इति ध्येयम्। एवञ्चेति प्रधानक्रममपेक्ष्य हविरभिघारण क्रमे सतीत्यर्थः।

द्वयोर्द्वयोरिति आग्नेयहविरभिघारणाग्नेययागयोः ऐन्द्रयागहविरभिघारणेनैकेन व्यवधानं ऐन्द्रयागीयहवि-रभिघारणैन्द्रयागयोश्च आग्नेययागेनैकेन व्यवधानं इति तात्पर्य्यं एवञ्च प्रथममाग्नेय हविषोऽभिघारणं तत ऐन्द्रस्य हविषोऽभिघारणं ततः क्रमेण आग्नेयैन्द्रयागौ इत्येवं

युक्तमित्युक्तमेव। मुख्यक्रमो हि प्रमाणान्तरसापेक्ष-प्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः पाठक्रमस्तु निरपेक्षस्वाध्याय पाठक्रममात्रसापेक्षतया न तथेति बलवान्। सचायं मुख्यक्रमः प्रवृत्ति-क्रमाच्च बलवान्। प्रवृत्तिक्रमे हि द्वितीयादिपदा-र्थानां प्रथमानुष्ठितक्रमापेक्षा बहूनामङ्गानां प्रधान-

---

क्रमस्तावत् मुख्यक्रमात् अवगतोभवतीति निष्कर्षः। व्युत्क्रमेणाघारे इति तत्रादौ यदि ऐन्द्रस्य हविषोऽभि-घारणं पश्चात् आग्नेयस्य तत् क्रियते तदा याज्यानुवाक्य-वशात् प्रथममनुष्ठीयमानस्य आग्नेययागस्य ऐकान्तिकं अव्यवधानं पश्चादनुष्ठीयमानस्य तु ऐन्द्रयागस्य आग्नेय-हविरभिघारणाग्नेययागाभ्यां द्वाभ्यां सुमहत् व्यव-धानं प्रसज्येत तच्चायुक्तं प्रयोगविध्यवगतसाहित्यस्य बाध-प्रसङ्गादित्यर्थः। मुख्यक्रमापेक्षया पाठक्रमस्य दुर्बलत्वे हेतुमाह प्रमाणान्तरेति प्रमाणान्तरसापेक्षा पाठक्रमा-त्मकप्रमाणान्तरजन्या या प्रधानक्रमप्रतिपत्तिः तत्सापेक्ष-तया तज्जन्यज्ञानविषयतया इति यावत् पाठक्रमस्य प्रा-बल्ये हेतुं प्रतिपादयितुमाह निरपेक्षेति निरपेक्षो यः स्वाध्यायपाठक्रमः तत्सापेक्षतया तज्जन्यप्रतिपत्तिविषय-तया इति भावः अग्रे निरूपयिष्यमाणात् प्रवृत्तिक्रमात्तु मुख्यक्रमस्य बलवत्त्वमाह सचायमिति मुख्यक्रमस्य बल-

विप्रकर्षान्मुख्यक्रमेतु सन्निकर्षात् सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानां आवृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थाद् यः क्रमः सप्रवृत्तिक्रमः। यथा प्राजापत्यपश्वङ्गेषु प्राजापत्यान्हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन दतो-यानिर्द्दैश्यात् सेति कर्त्तव्यताका एककालत्वेन विहिता अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पाद्यं तच्च प्राजापत्यपशूनां सम्प्रतिपन्नदेवताकत्वेन युगपदनुष्ठानात् उपपद्यते चोपाकरणादीनां युगपदनुष्ठानमशक्यं अतस्तेषां साहित्यमव्यवहितानुष्ठानात् सम्पाद्यम्। तच्चैकस्य उपाकरणं

---

वस्थापनाय प्रवृत्तिक्रमस्वरूपकथनगर्भं दौर्बल्यप्रयोजकं रूपं प्रदर्शयन्नाह प्रवृत्तिक्रमे हीति प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य वलवत्त्वं साधयितुमाह प्रवृत्तीति वलवत्त्वे हेतुमाह प्रवृत्तिक्रमे हीति अयमाशयः दर्शपूर्णमासयोः प्रथममाग्नेययागोऽनुष्ठीयते पश्चाच्च सान्नाय्ययागः तत्र वत्सापाकरणदोहनादयः केचन सान्नाय्यधर्माः प्रागेव आग्नेययागादनुष्ठीयन्ते एवं स्थिते यदि अवदानाभिघारणहविरासादनादयः सर्वेऽपि सान्नाय्यधर्माः प्रवृत्तिक्रमापेक्षया प्रथममेवानुष्ठीयेरन् अनन्तरमवदानादयो य आग्नेयधर्मास्तदनुष्ठानञ्च ततः सान्नाय्ययागानुष्ठानं

विधाय अपरस्योपाकरणं विधेयम् एवं नियोजना-दिक्रमपि। तथाच प्राजापत्येषु कस्माच्चित्पशोरा-रभ्य एकं सर्व्वं सर्व्वञ्चानुष्ठाय द्वितीयादिपदार्थ-स्तेनैव क्रमेणानुष्ठेयः सप्रवृत्तिक्रमः सोऽयं श्रुत्या-दिभ्यो दुर्व्वलः। तदेवं संक्षेपतो निरूपितः षड्-विधक्रमनिरूपणेन प्रयोगविधिः। कर्मजन्यफल-

---

स्यात् तदा सर्व्वेषामेव सान्नाय्यधर्म्माणां स्वप्रधानेन सान्नाय्येन सह द्वाभ्यामाग्नेयधर्म्मतदनुष्ठानाभ्यांविप्रकर्षः प्रसज्येत वत्सापाकरणादीनां केषाञ्चित् सान्नाय्यधर्म्माणां सत्यपि प्रथमसनुष्ठाने यदि अपरे अवदानादयो धर्म्मा मुख्यक्रमापेक्षया आग्नेयधर्म्मानुष्ठानान्तरमनुष्ठीयेरन् तदा सर्वेषामाग्नेय सान्नाय्यधर्म्माणामेकैकेन विजातीयेन व्यवधानंभवति आग्नेयधर्म्माणांस्वप्रधानेनसह सान्नाय्य-धर्म्मैर्व्यवधानात् सान्नाय्यधर्म्माणाञ्च स्वप्रधानेन सह आग्नेयानुष्ठानेन व्यवधानात् इति न तथा विप्रकर्ष इति प्रवृत्तिक्रमं लक्षयति सह प्रयुज्यमानेष्वित्यादिना प्रवृत्ति-क्रमस्य उदाहरणमाह यथेति प्राजापत्येत्यस्य विशेषणं अग्नेषेविकर्त्तव्यताकेति एककालत्वेन विहितेति च अत इति एककालत्वेन विहितत्वादित्यर्थः तेषामुपाकरणा-दीनां तच्च अव्यवधानेन साहित्यञ्चेत्यर्थः। प्रवृत्तिक्रमा-श्रयस्य फलं प्रकटयति तथा चेत्यादिना। सोऽयं प्रवृत्ति-

स्वाम्यबोधकोविधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वं। स च यजेत स्वर्गकाम इत्यादिरूपः स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते।

यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्व्वपेदित्यादिनाग्निदाहादौ निमित्ते

---

क्रम इति यावत् षड्विधक्रमनिरूपणाधीनप्रयोगविधिनिरूपणप्रकरणमुपसंहरति तदेवमिति। सम्प्रतिक्रमावगतमधिकारविधिं निरूपयति कर्म्मेति स्वघटकपदार्थीभूतविहित क्रियाजन्यफलाश्रयत्वप्रकारकबोधजनकवाक्यत्वमधिकारविधित्वमिति निष्कर्षः कर्म्मजन्यफलस्वाम्यपदं व्याकुरुते कर्म्मजन्येति सचेति अधिकारविधिश्चेत्यर्थः। अनेनेति यजेत स्वर्गकामेत्येत्यादिवाक्येनेत्यर्थः अधिकारिविधेरुदाहरणान्तरमपि व्युत्पत्तिवैशद्याय प्रदर्शयति यस्याहिताग्नेरिति क्षामवत इति क्षामवत्वगुणयुक्ताय इत्यर्थः। इत्यादिनेत्यस्य कर्म्म विदधतेत्यनेनान्वयः तच्च वाक्येनेत्युदाहरणीयस्य विशेषण कर्म्मजन्येति अग्निदेवताककर्म्मजन्येत्यर्थः। पुनरुदाहरणान्तरमाह एवमिति तच्चेति फलविधिवोधितश्चेत्यर्थः कोनामाधिकारो? यद्विशिष्टस्य पुंसः कर्म्मफलभोक्तृत्वरूपं फलस्वाम्यं विधिना प्रत्याय्यत इत्यत आह अधिकारश्चेति।

T

कर्मविदधता निमित्तवतः कर्मजन्यपापक्षयरूपफल-
स्वाम्यं चोद्यते। एवमहरहः सन्ध्यामुपासीतेत्यादिना
शुचिविहितकालजीविनः सन्ध्योपासनजन्यप्रत्यवाय-
परिहाररूपफलस्वाम्यं प्रतिपाद्यते। तच्च फलस्वाम्यं
तस्यैव योऽधिकारविशिष्टः अधिकारस्य यद्विधिवाक्येषु
पुरुषविशेषणत्वेन श्रूयते यथा काम्ये कर्मणि फल-
कामना। नैमित्ते कर्मणि निमित्तनिश्चयः। नित्ये
सन्ध्योपासनादौ शुचितत्कालजीवित्वम्। अतएव
राजा राजसूयेन यजेतेत्यनेन विधिवाक्येन स्वाराज्य-
मुद्दिश्य विदधतापि न स्वाराज्यमात्रकामस्य तत्फल-
भोक्तृत्वं प्रतिपाद्यते किन्तु राज्ञः सतः। स्वाराज्य
कामस्यैव राजत्वस्यापि अधिकारिविशेषणत्वेन श्रव-
णात् क्वचित्तु पुरुषविशेषणत्वेन अश्रुतमपि अधि-

---

अतएवेति पुरुषविशेषणत्वेन श्रूयमाणस्याधिकार-
रूपत्वादित्यर्थः। राज्ञः सतः क्षत्रियस्य सत इत्यर्थः
श्रवणादिति राजा राजसूयेन यजेतेति श्रवणादित्यर्थः
राजशब्देन क्षत्रियएवोच्यते नतु राज्यसम्बन्धमात्रेण
तदन्यः कोऽपि तथाच क्षत्रियस्यैव स्वाराज्यकामस्य राज-
सूययागेऽधिकारो नतु तद्भिन्नस्य स्वाराज्यकामस्य ब्राह्म-
णादेरिति तात्पर्य्यमवसेयं। विधिवाक्ये अश्रुतमपि फलं
क्वचिदधिकारिविशेषणं कल्पनीयमित्यन्यथानुपपत्त्या तत्

कारिविशेषणं। यथा अध्ययन विधिसिद्धा, विद्या-क्रतुविधीनां अर्थज्ञानापेक्षणीयत्वेन अध्ययनविधि-सिद्धार्थज्ञानवत्त्वं प्रत्येव प्रवृत्तेः।

एवं सामर्थ्यमप्याख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् तमर्थं प्रत्येव विधिप्रवृत्तेः तदेवं निरूपितो विधिः। प्रयोगसमवेतार्थस्मारका-मन्त्रास्तेषाञ्च तादृशार्थस्मारकत्वेनार्थवत्त्वं नतु तदुच्चारणमदृष्टार्थं सम्भवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्यत्वात्। नच दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि लब्धत्वात् मन्त्राम्नानं व्यर्थमिति वाच्यं मन्त्रै-

---

समाश्रयणेन अधिकारिविधिव्यवहारोपपत्तिरित्याह क्वचिदिति अस्योदाहरणमाह यथेति उक्तेऽर्थे हेतुमाह क्रतु विधानामिति तत्रैवोदाहरणान्तरमाह एवमिति।

अध्ययनविधिसिद्धविद्यादिवत् पुरुषसामर्थ्यमपि विधिवाक्यश्रुतमपि भवत्येव योग्यतया अधिकारिविशेषणमित्याह एवं सामर्थ्यमिति। उक्ते सिद्धान्ते प्राचां सम्मतिमाह आख्यातानामिति। चतुर्विधविधिनिरूपणमुपसंहरति तदेवमिति अवसरतो मन्त्रलक्षणमाह प्रयोगसमवेतेति अदृष्टार्थं अदृष्टमात्रार्थं इति भावः दृष्टफलकत्वमात्रकल्पनायां मन्त्रोच्चारणवैफल्यमाशङ्क्य परिहरति नचेति। मन्त्राम्नानं कर्मकाले मन्त्रोच्चारणं ननु-

T

एव स्मर्त्तव्यमिति नियमविध्युपगमात्। नानासाधन-साध्यक्रियायामेकसाधनप्राप्तस्यापरसाधनस्य विधि-र्नियमविधिः। यथाहुः विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयत इति। अस्यार्थः।

प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्व्वविधिः यथा यजेत स्वर्गकाम इत्यादिः। स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात्। पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः यथा व्रीहीनवहन्ती-त्यादिः कथमस्य पक्षेऽप्राप्तत्वमिति चेदित्थं। अनेन हि अवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यतेऽन्वय-

---

कोऽसौ नियमविधिरित्यत आह नानेति बहूनामुपाया-नामेकतमेन केनचित् कार्य्यसिद्धिसम्भवे तदन्यस्य व्यर्थ-त्वेन यत परित्यागः प्रसज्जेत तत्र तत्परित्यागपरिहाराय तत्र सिद्धहेतुभावेऽपि योविधिः सनियमविधिरिति फलि-तार्थः। प्रसङ्गात् त्रिविधविधिलक्षणं प्राचीनकृतं प्रदर्श-यति यथाहुरित्यादिना।

प्रमाणान्तरपदेन वेदतन्मूलातिरिक्तं प्रमाणं ग्राह्यं नियमः पाक्षिके सतीति वाक्यं व्याचष्टे पक्ष इति अस्य विधेरुत्पत्तिविधितो वैलक्षण्यं प्रकटयति अनेन हीत्या-दिना नियमशब्दार्थमाह सचेति नानोपायसाध्यत्वात्

T

व्यतिरेकसिद्धत्वात् किन्तु नियमः सचाप्राप्तांशपूरणं। वैतुष्यस्य हि नानोपायसाध्यत्वात् यद्यवघातं परित्यज्य उपायान्तरं ग्रहीतु मारभते तदा अवघातस्य अप्राप्तत्वेन तद्विधाननामकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधौ अप्राप्तांशपूरणात्मको नियम इति वाक्यार्थः। पक्षेऽप्राप्तावघातस्य विधानमिति यावत्। उभयोश्च युगपत्प्राप्ताबितरव्यावृत्तिपरोविधिः परिसङ्ख्याविधिः। यथा पञ्चपञ्चनखा भक्ष्या इति। इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्यरागतः प्राप्तत्वात् नापि नियमपरं पञ्चनखापञ्चनखभक्षणस्य युगपत् प्राप्तेः। पक्षेऽप्राप्तत्वाभावात् अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भावः परिसङ्ख्या विधिः साच द्विविधा श्रौती लाक्षणिकीचेति। तत्राचक्षेवावयन्तीति श्रौती परिसङ्ख्या एवकारेण

---

इति अवघाताद्यन्यतमोपायसाध्यत्वादिति तात्पर्य्यम्। तत्र चान्यत्येत्यादिवाक्यलभ्यपरिसङ्ख्याविधेः स्वरूपमाह उभयोश्चेति परिसङ्ख्याविधेरुदाहरणमाह यथेति परिसङ्ख्यायां क्रमेण अपूर्व्वविधिनियमविध्योर्वैलक्षण्यं प्रकटयितुमाह इदंहीति तस्य पञ्चनखभक्षणस्य रागतः प्राप्तत्वादिति अपूर्व्वविधिवैलक्षण्यसाधकोहेतुः युगपत्प्राप्तेरिति नियमवैलक्षण्यसाधकोहेतुः। परिसङ्ख्यां विभजते

पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। पञ्चनखा भक्ष्या इति लाक्षणिकी इतरनिवृत्तिवाचकपदाभावात् अतएवैषा त्रिदोषग्रस्ता। दोषत्रयञ्च श्रुतहानि-रश्रुतकल्पना प्राप्तबाधश्चेति तदुक्तं श्रुतार्थस्य परि-त्यागादश्रुतार्थप्रकल्पनात्। प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा। श्रुतस्य पञ्चनखभक्षणस्य हानात् अश्रुतापञ्चनखभक्षणनिवृत्तेः कल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठं प्राप्तबाधस्त्वर्थनिष्ठ इति दिक्। यस्मात्तु प्रयोगसमवेतार्थस्मारकत्वं न सम्भवति तदुच्चारणस्यानन्यगत्या अदृष्टार्थकत्वं

---

च सा चेति तत्राद्यामाह तत्रेति अत्रेति प्रकृत इत्यर्थः अवयन्तीति जानन्तीत्यर्थः। द्वितीयां प्रदर्शयति पञ्चेति पञ्च पञ्चनखाश्च शशकः शल्लकी गोधा खड्गीकूर्मोऽथपञ्चम इत्यादिवचनप्रामाण्याज्ज्ञेयाः। अतएवेति इतरनिवृत्ति-वाचकपदाभावादेव एषा द्वितीया लाक्षणिकीति यावत्। दोषत्रयस्य स्वरूपमाह दोषत्रयञ्चेति। उक्तेऽर्थे प्राचां सम्मतिसूचनीं कारिकामाह तदुक्तमित्यादिना श्लोकार्थं योजयति श्रुतस्येत्यादिना उक्तस्य दोषत्रयस्य आश्रय-व्यवस्थामाह अस्मिंश्चेति। यदुक्तं मन्त्राणामर्थस्मारकत्वेन नियमविधिगोचरत्वं तन्न सम्भवति ये खलु न प्रयोगसम-

T

कल्प्यते। इति नानर्थक्यमिति । नामधेयानाञ्च विधेयार्थं परिच्छेदकतयाऽर्थवत्त्वं तथाहि उद्भिदा यजेत पशुकाम इत्यत्र उद्भिच्छब्दो यागनामधेयं तेन च विधेयार्थपरिच्छेदः क्रियते। तथाहि अनेन वाक्येन अप्राप्तत्वात् फलोद्देशेन यागो विधीयते यागसामान्यस्य अविधेयत्वात् यागविशेष एव विधीयते तत्र कोऽसौ यागविशेष इत्यपेक्षायां उद्भिच्छब्दात् उद्भिद्रूपो याग इति विज्ञायते उद्भिदायागेन पशुं भावयेदित्यत्र सामानाधिकरण्येन नामधेयान्वयात् । नामधेयत्वञ्च निमित्तचतुष्टयात् मत्वर्थलक्षणाभयात् वाक्यभेदभयात् तत्प्रख्यशास्त्रात् तद्व्यपदेशादिति । तत्रोद्भिदायजेत पशुकाम इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं

---

देवतास्मारका उच्चारणीयास्तर्हि मन्त्रैव प्रयोगे तेषु कथं लक्षणसमन्वय इत्यत आह येषान्तु इति तथाच मन्त्रस्तावत् द्विविधः दृष्टादृष्टार्थः केवलादृष्टार्थत्वे तेनानुपपत्तिरिति हृदयं ।

विधेयार्थपरिच्छेद इति । इतरभेदवत्तया विहितकर्म्मनिश्चायकत्वं अत्र तत्त्वमित्यवसेयं यागसामान्यस्य यागत्वावच्छिन्नस्य अविधेयत्वात् युगपत् केनाप्यधिकारिणां कर्त्तुमशक्यत्वात् । नामधेयस्य विधेयार्थपरिच्छेदकत्वं विशदीकृत्य प्रदर्शयितुमाह तथाहीत्यादि । नामधेयता

मत्वर्थलक्षणा भयात्। तथाहि नतावदनेन वाक्येन फलं प्रतियागविधानं तं प्रति च गुणविधानं युज्यते वाक्यभेदापत्तेः। उद्भिच्छब्दस्य गुणसमर्पकत्वे च यागस्याप्राप्तत्वात् गुणविशिष्टकर्मविधानं वाच्यं उद्भिद्वता पशुं भावयेत् इति विशिष्टविधौ मत्वर्थलक्षणेत्युक्तमेव। चित्रया यजेत पशुकाम इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात् तथाहि न तावदत्र गुणविशिष्टयागविधानं सम्भवति "दधि-मधुपयोघृतं धाना उदकं तण्डुलाः तत्संसृष्टं प्राजा-

---

साधकाकाङ्क्षायामाह नामधेयत्वञ्चेति निमित्तचतुष्टयात् अनुपदं वक्ष्यमाणज्ञापकचतुष्टयात्। तान्येव च निमित्तान्याह मत्वर्थेत्यादि तत्रादौ मत्वर्थलक्षणाभयरूपं निमित्तं प्रदर्शयति तत्रोद्भिदेति। एतदेवविशदीकृत्य प्रदर्शयितुमाह तथाहीति तं प्रतियागमुद्दिश्य इत्यर्थः गुणविधानं उद्भिद्रूपगुणविधानमिति भावः। माभूद्गुणविधानं विशिष्ट विधिस्वीकारे काहानिरित्यत आह उद्भिच्छब्दस्येत्यादि वाक्यभेदभयेन नामधेयत्वाङ्गीकारे उदाहरणमाह चित्रया यजेतेति वाक्यभेदभयेन गुणविशिष्टयागविधानमनङ्गीकृत्य किमिति नामधेयरूपताङ्गीक्रियते इत्यत विनिगमकं दर्शयितुमाह तथाहीति फलमुद्दिश्य यागस्य यागमुद्दिश्य च गुणस्य च अनेनैव वाक्येन विधानं

पत्य मितनेन गुणस्य विहितत्वात् तद्विशिष्टयागविध्यनुपपत्तेः यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः तस्मात् चित्राशब्दः कर्मनामधेयम्। तथाच चित्रायागेन पशून् भावयेदिति सामानाधिकरण्येनान्वयान्नवाक्यभेदः प्रकृतेष्टेरनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वोपपत्तिः अग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वात् अग्निहोत्रशब्दः कर्मनामधेयमिति यावत्। नन्वयं गुणविधिरेव कुतो नेति चेन्न। यद्यग्नौ होत्रमस्मिन्निति सप्तमी समाससमाश्रित्य होमाधारत्वेनाग्निरूपोगुणोविधेयस्तदा यदाहवनीये जुहोतीत्यनेनैवाग्नेः प्राप्तत्वात् तद्विधानानर्थक्यं। अग्नये होत्रं इति चतुर्थीसमाससमाश्रित्य अग्निदेवता रूपोगुणोऽनेन विधीयत इति चेन्न तद्देव-

---

किमिति नाङ्गीक्रियत इत्यत आह यागस्येति। चित्रापदस्य पारिभाषिकत्वमनङ्गीकृत्यापिकर्मनामधेयत्वंसम्भवतीत्याह प्रकृतेष्टेरिति चित्रानामकेष्टिविशेषस्येत्यर्थः। तत्प्रख्यशास्त्रात् कर्मनामधेयत्वाङ्गीकारस्य उदाहरणं दर्शयितुमाह अग्निहोत्रशब्दस्येति अस्य गुणविधित्वमाशङ्क्य निषेधति नन्वित्यादिना। निषेधे हेतुमाह यद्यपीति।

तायाः शास्त्रान्तरेणप्राप्तत्वात्। किं तत् शास्त्रान्तरमिति चेद् यदग्नये च प्रजापतये च सायं जुहोतीति केचित्। अपरेतु अग्निर्ज्योतिरग्निस्स्वाहेति मन्त्रवर्णएवाग्निरूपदेवताप्रापकः। नन्वग्न मान्त्रवर्णिकत्वे प्रजापतिदेवतायावाधः स्यात् मन्त्रवर्णस्य चतुर्थीतो दुर्व्वलत्वात्। यथाहुः तद्धितेन चतुर्थ्या च मन्त्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्व्वलन्तु परं परम्। इति चेन्न यदग्नयेच प्रजापतयेच सायं जुहोतीत्यत्र न केवलं प्रजापतिविधानं किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत् समुच्चितप्रजापतेः एवं च न वाधः केवलप्रजापतिविधानाभावात्। न चात्र समुच्चितोभयविधानमेव कथं नेति वाच्यं समुच्चितोभय-

---

अस्मिन्निति सम्नातायातं अग्नौहोत्रमित्येतावन्मात्रस्यैवसप्तमीसमासविग्रहवाक्यत्वात् अन्यथाबहुव्रीहि समासापत्तेः। चतुर्थीतत्पुरुषोपि न भवतीति आह। अग्नये होत्रमिति! किन्तावत् तत्प्रख्यं शास्त्रमित्यपेक्षायामाह यदग्नय इत्यादि मतान्तरमाह अपरेत्विति। अग्नेर्मान्त्रवर्णिकत्वमाक्षिपति नन्वित्यादिना परिहरति नेति मान्त्रवर्णिकमग्निमनूद्य तत् समुच्चितस्य प्रजापते र्देवतात्वविधाने मन्त्रवर्णसापेक्षायाएव चतुर्थ्याः प्रयोजकत्वात् नात्र प्रजापतेर्देवतात्ववाधः मन्त्रवर्णनिरपेक्षाया एव चतुर्थ्या-

विधानापत्त्या अन्यतः प्राप्तमग्निमनूद्य तत्समुच्चित-
प्रजापतिमात्रविधाने लाघवात् एवं प्रयाजेषु समि-
धादिदेवतानां समिधः समिधोऽग्न आज्यस्यव्यन्त्वि-
त्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् समिधो यजतीत्यादिषु
समिधादिशब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयाः ।
श्येनेनाभिचरन् यजेतेत्यत्र श्येनशब्दस्य कर्मनाम-
धेयत्वं तद्व्यपदेशात् तेन व्यपदेशात् उपमानात्
तदन्यथानुपपत्तेरिति यावत् तथाहि यद्विधेयं तस्य
स्तुतिर्भवति यद्यत्र श्येनो विधेयः स्यात् तदा अर्थ-
वादैस्तस्यैव स्तुतिः कार्य्या यथा वै श्येनो निपत्यादत्ते
एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यनेनार्थवादेन
श्येनो न स्तोतुं शक्यः श्येनोपमानेन अर्थान्तरस्तुतेः
क्रियमाणत्वात् उपमानोपमेयभावस्य भिन्ननिष्ठ-
त्वात्। यदातु श्येनसंज्ञको यागोविधीयते तदार्थ-

---

स्तेन वाधान्न तत् सापेक्षाया इति नानुपपत्तिरिति तात्-
पर्य्यं । समुच्चितविधानमाशङ्क्य परिहरति नचेति, आश-
ङ्कापक्षे मन्त्रवर्णनिरपेक्षया चतुर्थ्या समुच्चितविधानाङ्गीकारे
मान्त्रवर्णिककेवलाग्निदेवतया समुच्चितविधानवाधः फल-
मिति द्रष्टव्यम्। तत्प्रख्यशास्त्रस्य उदाहरणान्तरमाह एव-
मिति तद्व्यपदेशात् नामधेयत्वं प्रदर्शयितुमाह श्येनेनाभि-
चरन्निति तद्व्यपदेशशब्दस्य निर्गलितार्थमाह तदन्यथा-

वादेन श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यत इति श्येनशब्दः कर्मनामधेयम् तद्व्यपदेशादिति। उत्-पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयनिमित्त-मिति केचित् यथा वैश्वदेवेन यजेतेत्यादावनोत्-पत्तिशिष्टाग्न्यादीनां बलीयस्त्वात् वैश्वदेवशब्दस्य विश्वदेवदेवताविधायकत्वं न सम्भवतीति कर्मनाम-धेयत्वम्। वस्तुतस्तु तत्प्रख्यशास्त्रादेवास्य कर्मनाम-धेयत्वं प्रकृतयागे विश्वदेवरूपगुणसम्प्रतिपन्नशास्त्र-स्यार्थवादरूपस्यैव सत्त्वात् यद्विश्वेदेवाः समयजन्त-तद्वैश्वदेवस्य वैश्वदेवत्वं। पुरुषस्य निवर्त्तकं वाक्यं निषेधः। निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिज-नकत्वेन एव अर्थवत्त्वात् तथाहि यथाविधिः प्रव-र्त्तनां प्रतिपादयन् स्वप्रवर्त्तकत्वनिर्व्वाहार्थं विधेयस्य यागादेरिष्टसाधनतामाक्षिपन् पुरुषं तत्र प्रवर्त्तयति

---

नुपपत्तेरिति अन्यथानुपपत्तिमेव प्रकटयति तथाहीत्या-दिना। प्रकारान्तरेण नामधेयत्वमङ्गीकुर्व्वतां वस्तुवल-मालम्ब्य तत्प्रख्यशास्त्रादेव वैश्वदेवशब्दस्य कर्म्मनामधेयत्वं प्रतिपादयितुमाह वस्तुतस्त्विति प्रकृतयाग इति वैश्वदेव-नामकेष्टीनां आग्नेयादीनां सङ्घातात्मके प्रकृतयाग इत्यर्थः क्रमप्राप्तं निषेधं निरूपयन् तस्यार्थवत्त्वं प्रतिपादयति निषेधेति परानिष्टेति अनिष्टे परत्वं अत्र बलवदिष्टाननु-

तथा न कलञ्जं भक्षयेदित्यादि निषेधोऽपि निवर्त्तनां
प्रतिपादयन् निषेध्यस्य कलञ्जभक्षणस्य प्रत्यनिष्ट-
साधनत्वमाक्षिपन् पुरुषं ततो निवर्त्तयति। ननु
निषेधवाक्यस्य कथं निवर्त्तना प्रतिपादकत्वमिति चेदु-
च्यते न तावदत्र धात्वर्थस्य नञर्थेनान्वयः अव्यव-
धानेऽपि प्रत्ययार्थभावनोपसर्ज्जनत्वेनोपस्थितेः। नह्य-
न्योपसर्ज्जनत्वेनोपस्थितमन्यत्रान्वेति अन्यथा राज-
पुरुषमानय इत्यत्रापि राज्ञः क्रियान्वयापत्तेः। अतः
प्रत्ययार्थस्यैव नञर्थेनान्वयः। तत्रापिनाख्यातत्वांश
वाच्यार्थभावनायास्तस्या लिङ्शवाच्यप्रवर्त्तनोपसर्ज्जन-
त्वेनोपस्थितेः नञस्त्वेवं स्वभावो यत् समभिव्या-
हृतपदार्थविरोधिबोधकत्वं। यथा घटोनास्तीत्यादौ
अस्तीति समभिव्याहृतो नञ् घटसत्त्वविरोधिघटा-
सत्त्वं गमयति। तदिह लिङ्समभिव्याहृतो नञ्

---

बन्धित्वरूपं ग्राह्यम् इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःख-
जनकत्वं वा। निषेधवाक्यस्य निवर्त्तना बोधकत्वं व्यवस्थाप-
यितुमाशङ्कते नन्विति समाधानमाह उच्यत इति अव्यव-
धानेऽपि व्यवहितप्रतीत्यविषयत्वेऽपि भावनोपसर्ज्जनत्वेन
आख्यातार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मव-
त्त्वेन, उपस्थितेरित्यस्य धात्वर्थस्य इत्यनेन सम्बन्धो द्र-
ष्टव्यः। अन्यथा अन्योपसर्ज्जनस्यान्यत्र अन्वयाभ्युपगमे

T

लिङर्थप्रवर्त्तनाविरोधिनीं निवर्त्तनामेवबोधयति त-द्विह विधिवाक्यश्रवणेऽयं मां प्रवर्त्तयति इति प्र-तीतेः तस्मान्निषेधवाक्यस्थले निवर्त्तनैव वाक्यार्थः। यदातु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थ-स्यैव तत्रान्वयः। तच्च बाधकं द्विविधं तस्यव्रतमि-त्युपक्रमः विकल्पप्रसक्तिश्च तत्राद्यं नेक्षेतोद्यन्तमा-दित्यमित्यादौ तस्य व्रतमित्युपक्रमस्य एतद्वाक्यपाठात्।

---

इत्यर्थः। क्रियान्वयापत्तेः आनयेति क्रियायां साक्षात् अन्वयापत्तेरित्यर्थः।

आख्यातार्थस्य अनेकत्वं प्रागव्यवस्थापितं तत् कस्मिन् खलु आख्यातार्थे नञर्थान्वय इत्याशङ्कायामाह तत्रापीति सति बाधकेतु नञर्थस्य धात्वर्थेनापि अन्वयः अनन्यगत्या अङ्गीकार्य्य इत्याह यदात्विति आख्यातार्थेन नञर्थस्य अन्वयविरोधिबाधकं विभजते तच्चेति तस्यव्रतमित्युप-क्रमस्यस्वरूपमाह तत्राद्यमिति एतादृशबाधकस्थले अनन्यगत्या निषेधस्य पर्य्युदासे लक्षणा स्वीक्रियत इत्याह तथा चात्रेति पर्य्युदासाङ्गीकारे हेतुमाह व्रतशब्दस्येत्यादि, व्रतशब्दस्य कर्त्तव्यार्थपरतायामेव तथाविधस्थले पर्य्यु-दासाश्रयणं युक्तमिति आदौ व्रतशब्दस्य तत्परत्वं प्रति-पादयति व्रतशब्दस्येति। रूढ़त्वात् निरूढ़लक्षणाश्रय-त्वात्। नेक्षेतोद्यन्तमादित्यमित्यादिवाक्यस्य कर्त्तव्यार्थ

T

तथाचात् पर्य्युदासाश्रयणं व्रतशब्दस्य कर्त्तव्यार्थे रूढ़त्वात् तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्त्तव्यत्वेनोपक्रमात् किन्तत् कर्त्तव्यमित्यपेक्षायां नेक्षेतोद्यन्तमादित्यमित्यादिना कर्त्तव्यार्थ एव प्रतिपादनीयः अन्यथा पूर्व्वोत्तरवाक्यर्योरेकवाक्यत्वं न स्यात् तथाच नञर्थेन न प्रत्ययार्थान्वयः। कर्त्तव्यार्थानवबोधात् विध्यर्थं प्रवर्त्तनाविरोधिनिवर्त्तनाया एव तादृशनञा बोधनात् तस्याश्च कर्त्तव्यार्थत्वाभावात्। तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षणसङ्कल्पएव लक्षणया प्रतिपाद्यते तस्य कर्त्तव्यत्वसम्भवात् आदित्यविषयकानीक्षणसङ्कल्पेन भावयेत् इति वाक्यार्थः। तत्र भाव्याकाङ्क्षायां एतावताहैनसावियुक्तोभवतीति वाक्यशेषात् पापक्षयो भाव्यतया अन्वेति। एवञ्च पूर्व्वोत्तरयोरेकवाक्यत्वं निर्व्वहत्येव नचात्र

---

बोधकत्वानङ्गीकारे अनुपपत्तिं प्रदर्शयितुमाह अन्यथेति अन्यथा एतद्वाक्यस्य कर्त्तव्यबोधकत्वानङ्गीकारे इत्यर्थः।

निषेधविधिबोध्यनिवर्त्तनायामपि प्रवर्त्तनावत् अंशत्रयापेक्षित्वेन प्रवर्त्तनावत् इतरांशसम्भावनायामपि निषेधस्य नित्यतया भाव्यांशासम्भवाशङ्कां परिहरन्नाह तत्र भाव्याकाङ्क्षायामिति शाब्द्यां प्रवर्त्तनायां आख्यातार्थस्य भाव्यत्वेनान्वयवत् निवर्त्तनायां शौचित्येन धात्वर्थविरो-

धात्वर्थे विरोधिनः पदार्थान्तरस्यापि सम्भवात् कथ-मनीक्षणसङ्कल्पस्यैव भावनान्वय इति वाच्यं तस्य कर्त्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्। द्वितीयं यजतिषु येयजामहं करोति नानुयाजेष्वित्यादावत्र विकल्पप्रसक्तौ पर्य्युदासाश्रयणात्। तथाहि यद्यत्रवाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात् तदानुयाजेषु ये यजामहमिति मन्त्रस्य प्रतिषेधः स्यात् अनु-याजेषु येयजामहं न कुर्य्यादिति स च प्राप्तिपूर्व्वक-एव प्राप्तस्यैव प्रतिषेधात् प्राप्तिश्च यजतिषु येयजा-महं करोतीति शास्त्रादेव वाच्या शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव नतु वाधः प्राप्तिमूलरागस्येव तन्मूलशास्त्रस्य शास्त्रान्तरेण वाधायोगात्। नच पदे जुहोतीति विशेषशास्त्रेणाहवनीये जुहोतीति

---

धिनः नञर्थस्यैवान्वयः किमिति नाङ्गीक्रियत इत्याशङ्क्य परिहरति नचेति प्रकृते निषेधविधिस्थले विकल्पप्रसक्ति-रूपं द्वितीयं वाधकं प्रदर्शयितुमाह द्वितीयमिति विकल्प-प्रसक्तिं स्फुटीकुर्व्वन्नाह तथाहीति मन्त्रस्य पतिषेधः स्यात् मन्त्रपाठान्निवृत्तिः स्यात् इति भावः प्राप्तिः प्रसक्तिः प्रसञ्जकमाह शास्त्रादेवेति।

शास्त्रात् प्राप्त्यङ्गीकारे किमायातमित्याह शास्त्रप्राप्त-स्येति न कलङ्कं भजयेदित्यतरागतः प्राप्तिः यथा शास्त्रेण

शास्त्रस्यैव नानुयाजेष्वित्यनेन यजतिषु येयजामहं-
करोतीत्यस्य बाधः स्यादिति वाच्यं परस्परनिरपेक्षयो
रेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि
स्वार्थविधानार्थं आहवनीयशास्त्रानपेक्षणात् निर-
पेक्षत्वं। प्रकृते निषेधशास्त्रस्य निषेधप्रसक्त्यर्थं
यजतिषु येयजामहं इत्यस्यापेक्षणात् न निरपेक्षत्वं
तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे
विकल्पएव सच न युक्तः। विकल्पे शास्त्रस्य पा-
क्षिकाप्रामाण्यसम्पातात् नह्यनुयाजेषु येयजामह
मित्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं सम्भ-
वति व्रीहियागानुष्ठानेयवशास्त्रस्येव द्विरदृष्टक-
ल्पना च स्यात् अतो नात्र प्रतिषेधस्याश्रयणं किन्तु

---

निवार्य्यते तथा शास्त्रतः प्राप्तिः कथं न निवार्य्येत इत्यत
आह प्राप्तिमूलरागस्येति। शास्त्रान्तरेण स्वापेक्षया बल-
वता शास्त्रान्तरेण इत्यर्थः बलवतैव दुर्ब्बलस्य बाध्यत्वात्
तुल्यबलविरोधे विकल्पएव लोकवेदोभयसाधारणइति भावः।
विकल्पप्रसक्तिं साधयित्वा विकल्पस्य अन्याय्यत्वमाह
तस्मादित्यादिना न युक्त इत्यन्तेन। विकल्पपक्षे बाधक-
माह विकल्प इति पाक्षिकाप्रामाण्यसम्भवात् एकतरा-
नुष्ठाने अन्यतरस्य अननुष्ठानलक्षणस्य सामानाधिकरण्येन
अप्रामाण्यस्य प्रसक्तेरित्यर्थः।

नञोऽनुयाजसम्बन्धमाश्रित्य पर्य्युदासतैव । इत्थ-ञ्चानुयाज-व्यतिरिक्तेषु-यजतिषु-यजामहंकुर्य्यादिति वाक्यार्थबोधः । नञोनुयाजव्यतिरिक्तवाचकत्वात् एवञ्च न विकल्पः अत्र च वाक्ये येयजामहमितिन विधीयते यजतिषुये यजामहमित्यनेनैव प्राप्तत्वात् । किन्तु सामान्यशास्त्रप्राप्त ये यजामह इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयत्वं विधीयतेयद्यजतिषु यजामहं करोति तदनुयाजव्यतिरिक्तेष्वेवेति । नन्वेवं सामान्यशास्त्रप्राप्तस्य विशेषे सङ्कोचनरूपादुपसंहा-रात् पर्य्युदासस्य भेदो न स्यादिति चेन्न उपसंहारो हि तन्मात्रसङ्कोचार्थः यथा पुरोडाशं चतुर्द्धाकरो-तीति विशेषादाग्नेयपुरोडाशमात्रेसङ्कोच्यते पर्य्यु-दासस्तुतदन्यमात्रसङ्कोचार्थइतिततोभेदात्-कुत्रचित्-विकल्पप्रसक्तावपिअनन्यगत्याप्रतिषेधाश्रयणं यथा नातिरात्रे षोड़शिनं गृह्णातीत्यादौ । अत्र हि अति-रात्रे षोड़शिनं गृह्णातीति शास्त्रप्राप्तषोड़शिग्रह-

---

पर्य्युदासपक्षे नञः कीदृशः अर्थः सम्पद्यते कुत्र च तस्यान्वय-इत्यपेक्षायामाहइत्थञ्चेति । सामान्यशास्त्रस्य विशेषपरत्वरूपादुपसंहारात् पर्य्युदासस्य वैलक्षण्यं दर्श-यितुं शङ्कते नन्विति परिहरति नेति उपसंहारस्य उदाहरणप्रदर्शनव्याजेन तत्स्वरूपं विवृणोति यथा चतु-र्द्धेति । ततः उपसंहारात् विकल्पप्रसक्तोपर्य्युदासवत्



T

णस्यनिषेधाद्विकल्पप्रसक्तौ अपि न पर्य्युदासाश्रयणं असम्भवात्। तथाहि यद्यत्रषोड़शि पदार्थेन नञो-ऽन्वयः तदातिरात्रे षोड़शिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधःस्यात् सचनसम्भवति अतिरात्रे षोड़शिनं गृह्णातीति प्रत्यक्षविधिविरोधात्। यदि च अतिरात्रेण पदार्थेनान्वयः तदातिरात्रव्यतिरिक्ते षोड़शिनं गृह्णातीतिवाक्यार्थबोधःस्यात्सोऽपि नसम्भवतितद्विधिविरोधात्। अतोऽत्रानन्यगत्या शास्त्रप्राप्तषोड़शिग्रहणस्यैव निषेधःनचविकल्पप्रसक्तिस्तस्याप्यपेक्षणीयत्वात्। इयां स्तुविशेषो यद्विकल्पादेकप्रतिषेधेऽपिप्रतिषिध्यमान-स्यापि नानर्थहेतुता विधिनिषेधोभयस्यापिक्रत्वर्थ-त्वात्। यत्र तु न विकल्पः प्राप्तिस्तुरागतएव प्रतिषेध-स्तुपुरुषार्थः तत्रप्रतिषिध्यमानस्यानर्थहेतुत्वं यथा न

---

प्रतिषेधस्यापिक्वचित्समाश्रयणंभवतीत्याहक्वचिदिति-षोड़शी यज्ञीयपात्रविशेषः पर्य्युदासास्वीकारे उक्तमसम्भवं हेतुंविशदीकर्त्तुमाहतथाहीति अत्र, नातिरात्रे षोड़शिनं गृह्णातीतिवाक्ये, नञः नञर्थस्य गृह्णातीत्यस्य लेड्रूपत्वात् गृह्णीयादित्यर्थपर्य्यवसानं ज्ञेयम्। शास्त्रप्राप्तस्यनिषिद्ध-रूपत्वे विकल्पएवपर्य्यवस्यति स किमितिनाङ्गीक्रियत इत्या-शङ्कयद्वस्यापत्यापरिहरति नचेति निषिध्यमानस्यअनुष्ठानं क्वत्र,क्वच, अनिष्टजनकं भवतीति विवेकाय आह यत्रत्विति निषिध्यमानस्य अनर्थहेतुत्वे विकल्पस्य अवसरएव नास्तीति

T

कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणादेस्तत्र भक्षणनिषेधस्यैवपुरुषार्थत्वात् । नयदीक्षितोनददाति नजुहोतीत्यादौशास्त्रप्राप्तदानहोमादीनां निषेधाद्-विकल्पप्राप्ति-रितिवाच्यंस्वतः-पुरुषार्थ-भूतदानहोमादीनांनिषेधस्यपरुषार्थत्वाभावेऽपि निषिध्यमानस्यानर्थहेतुत्वात् यथाऋतौस्वस्त्रीगमनादेः क्रत्वर्थत्वेन तस्यलक्षणयाप्रयोजनवदर्थपर्य्यवसानं। तथाह्यर्थवाद-वाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषेध्ययोःप्राशस्त्यनिन्दितत्वे प्रतिपादयतिस्वार्थमात्रपरत्वेत्रानर्थक्यप्रसङ्गात् आम्नायस्य क्रियार्थत्वात् नचेष्टापत्तिः स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना सकलवेदाध्ययनं कर्त्तव्यं इतिबोधयतासर्व्ववेदस्यप्रयोजनवदर्थपर्य्यवसायित्वं सूचयता उपात्तत्वेनानर्थक्यानुप-

---

पत्त्यादयितु शास्त्रप्राप्तनिषेधस्थले विकल्परूपतामाशङ्क्य निषेधति नचेति विकल्परूपतानाश्रयणे हेतुमाह स्वत-इतितत्उदाहरणान्तरमाह यथेति । क्रमप्राप्तमर्थवादं लक्षयति प्राशस्त्येतितस्यअर्थवादात्मकवाक्यस्य प्रयोजनवदर्थपर्य्यवसानं यादृशार्थबोधे विधिनिषेधौवाअनुष्ठानस्य अननुष्ठानस्यवाऔपयिकत्वेनअनुगृह्णीतोभवेत् तादृशार्थप्रत्यायकत्वमिति यावत् । न च वाक्ये शक्त्यभावात् शक्यसम्बन्धरूपायालक्षणायाःकथंवाक्येसम्भव इतिवाच्यं लक्षणायाःशक्यसम्बन्धरूपत्वे प्रमाणाभावात् सामान्यतःस-

पत्तेः । स द्विविधः विधिशेषो निषेधशेषश्चेति तत्र वायव्यं श्वेत मालभेतभूतिकामइत्यादिविधिशेषस्य वायुर्वैक्षेपिष्ठा देवतेत्यादे र्विधेयार्थप्राशस्त्यबोधकतया अर्थवत्त्वं । बर्हिषि रजतं न देयम् इत्यादि निषेधशेषस्य सोऽरोदीत् यदरोदीत्तद्रुद्रस्य रुद्रत्वं इत्यादे र्निषेधस्य निन्दितत्वबोधकतयार्थवत्त्वम् । न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेननार्थवादस्यार्थवत्त्वमिति वाच्यं आलस्यादिवशादप्रवर्त्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात् । सपुनस्त्रेधा । तदुक्तम् विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधामतः । इति । अस्यार्थः प्रमाणान्तरविरोधेसत्यर्थवादोगुणवादः यथा आदित्योयूप इत्यादि यूपे आदित्याभेदस्य प्रत्यक्ष-

---

स्वन्यत्वस्य अननुगतत्वेन दुर्निर्वचत्वात् वाक्यघटकैकपदस्य लक्षणाङ्गीकारे इतरपदानां वैयर्थ्यप्रसङ्गात् तात्पर्यग्राहकत्वकल्पनापक्षस्य च विनिगमनाविरहरूपदुरुद्धरदोषग्रस्तत्वाच्च । विधेर्निषेधस्य च वैदिकस्य स्वभावादेव प्रवर्त्तकतायां निवर्त्तकतायां वा सिद्धायां अर्थवादवाक्यानां प्रयोजनवदर्थप्रतिपादकत्वाभावमाशङ्क्य निषेधति नचेति प्रकारान्तरेण पुनरर्थवादं विभजते सपुनरिति एतादृशविभागे प्राचां सम्मतिमाह तदुक्तमित्यादिना प्रमाणान्तरविरोधत्वञ्चेति वेदातिरिक्तप्रमाणजन्यज्ञानाविषयत्वे सति

T

बाधितत्वादादित्य वदुञ्च सत्वरूपोगुणोऽनेनलक्षणया-प्रतिपाद्यते । प्रमाणान्तरावगतार्थबोधकोऽनुवादो यथा अग्निर्हिमस्य भेषजं इत्यत्र हिमविरोधित्व-स्याग्नौ प्रत्यक्षावगतत्वात । प्रमाणान्तरविरोधतत्-प्राप्तिरहितार्थबोधकोभूतार्थवादः यथा इन्द्रोवृत्राय वज्रमुदयच्छत् इत्यादिएवञ्चयजेतस्वर्गकामइत्यादि नि-खिलवेदस्य साक्षात्परम्परया वा यागादिधर्मप्रति-पादकत्वं सिद्धम् सोऽयं धर्म्मो यदुद्दिश्यविहितः तदु-द्देशेन क्रियमाणस्तद्धेतुः ईश्वरार्पणबुद्ध्यातु क्रिय-माणःनिःश्रेयसहेतुः । नचतदर्पणबुद्ध्यानुष्ठाने प्रमाणा-भावः यत्करोषियदश्नासियज्जुहोषिददासियत् । यत्-

---

वेदातिरिक्तप्रमाणजन्यज्ञाना विरोधिज्ञानविषयोयोर्थः तत् प्रतिपादको विधिशेषः भूतार्थवाद इति पर्य्यवसितोऽर्थः । तदुदाहरणमाह इन्द्र इत्यादि चोदना लक्षणोर्थो धर्म्म इति प्रतिपादितधर्म्मलक्षणस्य तद्बोधकत्वेन वा वेदप्रामा-ण्यस्य न कुत्रापि क्वच्योऽसङ्गतिरिति ग्रन्थमुपसंहरन्नाह एव-मिति एवं एतावत् पर्य्यन्तग्रन्थघटकवाक्यैरित्यर्थः अस्य च सिद्धमित्यत्र धात्वर्थेनान्वयः । एवं विहितस्य यागादेः स्व-र्गादिभोगजनकादृष्टहेतुत्ववत् दुःखात्यन्तनिवृत्तिसहकृत-नित्यानन्दाभिव्यक्तिरूपमोक्षसाधकत्वं व्यवस्थापयितुमाह ईश्वरार्पणेति नचैतादृशे सिद्धान्ते प्रमाणाभावः श्रुति-मूलकस्मृतेरेव तत्र प्रमाणत्वादित्याह नचेति प्रारब्धग्रन्थ-

तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणमिति भगवद्गीता-स्मृतेरेवप्रमाणत्वात् स्मृतिचरणे तत्प्रामाण्यस्य श्रुतिमूलकत्वेन व्यवस्थापनादिति शिवम् ।

बालानां सुखबोधाय भास्करेण सुमेधसा ।
रचितोऽयं समासेन जैमिनीयार्थसंग्रहः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिभास्करविरचितपूर्व्वमीमांसार्थसङ्ग्रहनामकं प्रकरणं समाप्तम् ।

---

परिसमाप्तिसूचकं स्वनामप्रसिद्धिप्रयोजनकं श्लोकमवतारयति बालानामिति ।

यदत्र पूर्व्वापरसङ्गतिच्युतम्
प्रमादतोवः स्खलितं विरुद्धम् ।
विमत्सरा वीक्ष्य कृपाविधेयाः
शिष्टा विशुद्धं रचयन्तु तन्मे ॥

क्षीराब्धेरिव चन्द्रमा दिनमणिः पूर्व्वाद्रिशृङ्गाद्यथा
प्रोद्भूतो भुवनप्रसारिख्याति वंसिष्ठान्वयात् ।
विद्वद्वृन्दविनिद्रदर्पनलिनोद्दामद्विपेन्द्रोपमः
श्रीताराचरणो द्विजः सुविदितो विद्यार्थिकल्पद्रुमः ॥

तस्यात्मजः प्रमथनाथ इतिप्रतीतः
सञ्चिन्त्य तच्चरणवारिजयुग्ममन्तः ।
व्युत्पत्तये स्मृतिमतां निजदेशजानाम्
टीकामिमां रचितवानमलाभिधानाम् ॥

इति श्रीप्रमथनाथतर्कभूषणविरचितार्थसङ्ग्रहामलाटीका समाप्ता ।

---

# বিজ্ঞাপন।



| | | | মূল্য | ডাঃ মাঃ |
|---|---|---|---|---|
| অমলা | ... | ... | ॥৶০ | ৶০ |
| ( লৌগাক্ষিকৃত অর্থসংগ্রহের টীকা ) | | | | |
| রাসরসোদয়ম্ কাব্যম্ | | ... | ॥০ | /০ |
| ( রাসলীলাবর্ণন ) | | | | |
| বিজয়প্রকাশঃ | ... | ... | ॥০ | /০ |
| ( কাশীর সুপ্রসিদ্ধস্বামীবিশুদ্ধানন্দসরস্বতীর জীবনচরিত ) | | | | |
| ব্যাপ্তিপঞ্চকবিবৃতিঃ | | ... | ৶১০ | /০ |
| ( মাথুরীপঞ্চলক্ষণীর টীকা ) | | | | |
| কোকিলদূতম্ | | ... | ।৶০ | /০ |
| ( খণ্ডকাব্য ) | | | | |

কলিকাতা সংস্কৃতকলেজের অলঙ্কার ও স্মৃতি শাস্ত্রের অধ্যাপক শ্রীযুক্তপ্রমথনাথতর্কভূষণকর্ত্তৃকবিরচিত উক্তগ্রন্থসকল নিম্নলিখিত ঠিকানায় পাওয়া যায়।

৫০ নং হারিসন রোড, কলিকাতা

শ্রীযুক্তরামচরণভট্টাচার্য্যের নিকট,
খালিসপুরা বাঙ্গালীটোলা ৮ কাশীধাম,
কাশীরাজ সভাপণ্ডিত শ্রীযুক্তপ্রিয়নাথ তত্ত্বরত্নের নিকট।

T

T

